# KAVYAKALAPA.

No. 4.

CONTAINING

## A BEST COUPLE OF SANSCRIT POEMS:

## GEETAGOVINDA

AND

## RADHAVINODA

WITH COMMENTARY

PUBLISHED BY

HARIDAS HIRACHAND,

EDITOR OF "DHATUMANJARI."

Bombay:

PRINTED AT THE "VRITTADEEPA" PRESS.

(Registered under Act XX. of 1847.)

1865.

*Price Rs.* 1

# काव्यकलापः

अंक ४

तत्र

## श्रीगीतगोविंदाख्यं काव्यं सटीकं

अपरं

## श्रीराधाविनोदाख्यं काव्यं सटीकं

एवंयुग्मं

सच्छास्त्रितः शोधयित्वा

## हरिदास वि० हिराचंदेन

---

मुंबय्यां

वृत्तदीपमुद्रालये

अंकीकृतं

संवत् १९२१ शक १७८७

मौल्यं रु० १॥

To

SHETT HANSRAJ KARAMSHI ESQUIRE.

**This Work is Dedicated**

As an humble token of gratitude for the boon he
confers on Sanscrit learneds, by supplying
them with most interesting Sanscrit
works with great facility, and for
the encouragement he gives
to vernacular literature,

BY HIS OBLIGED AND OBEDIENT SERVANT,

HARIDAS HIRÁCHAND

श्री

रघुकुलावतंसश्रीमद्रामचंद्रसूनुः

लवस्तद्वंशातिलकधर्मधुरंधरः

श्रेष्ठ कर्मासिंह रणमल्लः

तस्यात्मजस्य हंसराजस्य

उदारात्मिकया प्रेरणया अमुयोः काव्ययोः

अंकनं जातं

# PREFACE.

In Northern *Hindustan*, near *Jagannath*, there lived in a village named *Kindubilva*, *Bhojadeva* a Brahmin of *Kanyakubja* family, he had a wife named *Radha* from whom *Jayadeva*, the king of poets, took birth. *Jayadeva*, from his infancy used to take his lesson once for a fortnight from his teacher, hence his other name was *Paxadhara misra*, or a fortnight Student. He was an able Logician, Rhetorician, Dramatist, Songster, and strictly addicted his faith on *Krishna* as we find his works on all the subjects.* In *Geetagovinda* he has sung most delicately and tastefully the description of departure and meeting of *Radha* and *Krishna*. There being 24 songs, each of 8 *Padas* in this work it is also called *Ashtapadi*. The author has adored its language both literally and significantly. No such interesting work is produced up to this time.

In the time of *Jayadeva*, there was a king named *Satvika* near *Jagannath*, who being envious of *Jayadeva's* work, made a new work similar to it, and distributed some of its copies amongst learned Brahmins. The Brahmins fell in dispute about the superiority and inferiority of both the works, and to settle the dispute they decided to put the works in the presence of the Idol of God *Jagannath*, and shut the doors and the one which the God would choose he would keep by himself and throw the other. It was done accordingly, and the God kept to himself the work of *Jayadeva* and threw away that of *Satvika*. Afterwards *Jayadeva* added

* (The work on logic by this author is named in a commentary by *Gadadhar* on *Shiromani*, a work on the same subject) on Logic. *Chandraloka* on Rhetorics. *Prasanna Raghava* drama, *Geetgovinda* for Singing and faith on *Krishna*.

some Shlokas of the other work in his own, and asked pardon from the God for his doing so.

In preparing this work the author was once in doubt how to define the body of *Radha*, and nothing coming in thought he went to bathe leaving the work as it was Then *Krishna* coming himself wrote the appropriate lines and became invisible. Afterwards the author came, and was amazed by looking the lines written as he desired.

There are many other miracles described in *Bhaktamala*, *Bhaktivijaya* and *Santamalika* about this author.

*Geetgovinda* was sung in the Court of *Vikramaditya*, and singers of *Karnatic* sing these songs most delicately in various modes. In the *Kalinga desha* they sing the songs on the birth-day of *Krishna*; and the followers of *Vallabhacharya* sing them on the night of *Kartik Shudha* 11th and in spring season those of *Vasanta Raga*.

Subsequent to *Geet Govind*, many works similar to this *(Ashtapadi)* have been made about *Shiva* and *Vishnoo*, but none has been equal to this as is decided by Sanscrit learneds.

2. Nothing else without the name of the author of *Radhavinoda* is known about it, which is written at the end of the work.

3. The first number of this *Kavyakalapa* consists 37 poems of ancient famous poets, the second contains *Laxmisahasra* by *Venkatadhvary Acharya*, and the third contains *Vidagdha Mukha Mandana* by *Dharmadasa* with commentary. H. H.

# प्रस्तावना

श्रीजगन्नाथक्षेत्र पासें, किंदुबिल्व नामें गाममां, कन्यकुब्ज जातीमा भोज देव नामे एक ब्राह्मण हता, तेनी राधा नामें स्त्री हती. तेथी श्रीजयदेवकावि उत्पन्न थया, ते बाळावस्थाथीज गुरुपासेंथी बीजे पुरुषें १५ दिवसें भणाय एटलुं पोते एक दिवसें भणता, तेथी एनुं बीजुं नाम पक्षधरमिश्र एवुं प्रसिद्ध थयुं अनें ते न्यायशास्त्रमां पारांगत हता तेथी तेना रचेला ग्रंथनुं नाम गदाधरीमां प्रसिद्धछे. अनें रसालंकारादिकमां पण घणा चतुर हता एवुं एना रचेला चंद्रालोक ग्रंथिथी जणायछे. अने नाटकमां पण परिपूर्ण हता ते एना रचेला प्रसन्नराघव नाटकथी जणायछे. वळी ते गायन विद्यामां अनें श्रीकृष्णनी भक्तिमां धुरंधर हता एवुं एना रचेला गीतगोविंदना २४ प्रबंधना राग ताळ नराळा नराळा छे तेथी जणायछे गायनविद्यामां जे प्रकरण थाय छे ते प्रबंध कहेवायछे तेमां पहेला प्रबंधमां दशावतारना वर्णनथी ११ पद थयांछे. अनें बीजा प्रबंधमां विष्णु लीळाना वर्णनथी ९ पद थयांछे अने दशमा प्रबंधमां अति विरहनुं वर्णन विशेषे थयुं नही तेथी ५ पद थयांछे अने बीजा २१ प्रबंधमां तो आठ आठज पदछे तेथी ए गीतगोविंदनुं बीजुं नाम अष्टपदि एवुं पण प्रसिद्धछे. तेमां संयोग विप्रयोग द्विदळात्मक शृंगार रसनुं वर्णन श्रीराधाकृष्णना विहारमां गायुंछे. तेमां शब्दालंकार अने अर्थालंकार पुष्कळछे तेमां पण अर्थालंकार उपर ए कविनो लक्ष घणो रहेलोछे. अनें एवो मनोहर रसात्मक ग्रंथ आज सुधी बीजो थयो नथी.

ते समयमां श्रीजगन्नाथ क्षेत्रविषे एक सात्विक नामे राजा हतो तेणे जयदेवस्वामी उपर इर्ष्या लाविने एक सुंदर ग्रंथ रच्यो तेनी केटलीक प्रत्यो लखावी लोकोमां वेचीने एणे प्रसिद्ध करी. तेवखते ब्राह्मणोयें परस्पर ते ग्रंथनी श्रेष्ठता कनिष्ठताविषे वाद चलाव्यो पाछे तेना न्याइत श्रीजगन्नाथजी ठराविने बेय ग्रंथ मंदिरमां मुकीने कमाड बंध कर्याने निश्चय कर्योजे जे ग्रंथ श्रेष्ठ हशे ते श्रीजगन्नाथजी पासे राखशे ने कनिष्टने नाखी देशे. पछी श्रीजगन्नाथजीयें गीतगोविंद पाशे राख्यु अने बीजो ग्रंथ फेंकी दीधो. पछी श्रीजयदेवजीयें ते ग्रंथना केटलाक श्लोक गीतगोविंदमा मेळव्या अने प्रभूनी प्रार्थना करीने क्षमा मागी.

आ ग्रंथ रचतां एक दिवस कविने एवुं थयुं जे श्रीराधिकाजीना अंगनु वर्णन बरावर हुं लोकमा के रीतें प्रसिद्ध करुं, तेवु कांइ न सूझतां ग्रंथ एमज मुकीने जयदेव नावा गया. पछि साक्षात् श्रीकृष्ण तहां आविने श्रीहस्ते ते प्रसंग लखी पुरो करीने अंतर्धान थया. तार पछि जयदेव आविने जुवे तां ते प्रसंग पुरो वांचिने आश्चर्य पाम्या.

पेहेलां विक्रमराजानी सभामां गीतगोविंद गवातां हतां अने हाल पण कर्णाटक देशमां गवैया अनेक राग ताळमां घणां मनोरंजक गायछे. कलिंगदेशमां श्रीकृष्णनो उत्सव वर्षो वर्ष थायछे तां आखी रात गीत-गोविंद गाइने जागरण करवानी चाल्यछे. श्रीवल्लभाचार्यना संप्रदायमां पण कार्तिक शुदि ११ नी रातें गीतगोविंद गवायछे अने बसंतपंचमीथी पण खेलमां वसंतरागनां गीतगोविंद गवायछे.

तार पछी अष्टपदि नामे विष्णुनी ने शिवनी काव्यो घणां थइछे ते जो मर्मज्ञ पंडित जोसे तो तेने गीतगोविंद बरावर सुंदरता नै जणाय.

ह० ही०

॥ श्रीगोपीजनवल्लभायनमः ॥

॥ काव्यकलापः ॥

॥ अंकश्चतुर्थः ॥

॥ तत्र ॥

# गीतगोविंदकाव्यं

॥ मेघैर्मेदुरमंबरंवनभुवःश्यामास्तमालद्रुमैर्नक्तंभीरुरयंत्वमेवतादिमंराधेगृहंप्रापय ॥ इत्थंनंदनिदेशतश्चलितयोःप्रत्यध्वकुंजद्रुमंराधामाधवयोर्जयंतियमुनाकूलेरहःकेलयः ॥ १

॥ श्रीराधाकृष्णायनमः ॥ भद्रायभवतांभूयात्कृष्णः सद्भक्तिभावितः कालिंदीजलससर्गमेघःश्यामोतिसुंदरः १ इहकवि प्रारीप्सितस्यनिर्विघ्नपारेसमाप्त्यर्थंकृष्णस्मरणरूपंवस्तुनिर्देशलक्षणंमंगलाचरणंतावदाचरति मेघैरिति राधामाधवयोःरहः केलयोयमुनाकूलेजयंतीत्यन्वयः राधाकृष्णयोःरहःकेलयःएकांतक्रीडाःयमुनाकूलेयमुनातीरेजयंतिसर्वोत्कर्षेणवर्त्तंते कथंभूतयोःराधामाधवयोः प्रत्यध्वकुंजद्रुमं अध्वनिमार्गे कुंजलतागृहेद्रुमेवृक्षे च इत्थंइतिनंदनिदेशतःनंदाज्ञयाचलितयोः अथवा अध्वकुंजद्रुमान्प्रति उद्दिश्यचलितयोः इतिकि हेराधेअंबरंआकाशंमेघैर्मेदुरंव्याप्तमित्यर्थः वनभुवःतमालद्रुमैर्वृक्षैःश्यामाः अतःकृष्णःनक्तंरात्रौभीरुःभयशीलःअतबालत्वात् तस्मादेमंपुरोवर्तिनंकृष्णंगृहंप्रापयएवंकरणेनंदस्यान्याश्रमान्विश्वासाभावात्

॥ वाग्देवताचरितचित्रिताचित्तसद्मापद्मावतचिरणचारण चक्रवर्ती ॥ श्रीवासुदेवरतिकेलिकथासमेतमेतंकरोति जयदेवकविःप्रबंधम् ॥ २ ॥

इदानींकविः सरस्वतीलक्ष्म्योः कीर्त्तनपूर्वकंकृष्णस्यसुरतक्रीडावर्णनंकर्तुमाह वाग्देवतेति जयदेवकविःएतत्प्रबंधंकृष्णकेलिकथाप्रतिपादकंग्रंथंकरोतीत्यन्वयः कथंभूतोजयदेवकविः वाग्देवताचरितचित्रिताचित्तसद्मा वाग्देवतायाः सरस्वत्याश्चरितेनवचनरचनानिर्विशेषेणचित्रितंमंडितं चित्तसद्ममनोग्रहंयस्यसः पुनःकथंभूतःपद्मावत्यालक्ष्म्याश्चरणेनसंवाहनेनचक्रवर्त्तीनृपइवलक्ष्मीसेवीहिचक्रवार्तित्वंप्राप्तइति कथंभूतंप्रबंधंश्रीवासुदेवेति श्रीरूपाराधावासुदेवःश्रीकृष्णस्तयोः रतिकेलिकथयासुरतक्रीडाकथनेनसमेतंयुक्तं

॥ यदिहरिस्मरणेसरसंमनोयदिविलासकलासुकुतूहलं ॥
॥ मधुरकोमलकांतपदावलींशृणुतदाजयदेवसरस्वतीं ॥ ३ ॥

अथकविर्निजग्रंथप्रयोजनमाह द्रुतविलंबितेनवृत्तेन यदीति हेकृष्णभक्तयदा तर्हिजयदेवसरस्वतींशृणुइत्यन्वयः यदायर्हिहरिस्मरणेकृष्णचिंतने सरसंसानुरागंतवमनःअस्तीत्यध्याहारः यदियर्हिविलासकलासुविलासःश्रीकृष्णविलासःकलाचतुःषष्टिस्तासुकुतूहलमस्तीति कथंभूतांजयदेवसरस्वतीं मधुरासरसा अर्थतःकोमलाः शब्दतःअतएवकांतामनोहरापदावली पदसमूहोयस्यांसाताम्

॥ वाचः पल्लवयत्युमापतिधरःसंदर्भशुद्धिंगिरांजानीतेजयदेवएवशरणःश्लाघ्योदुरूहद्रुतेः शृंगारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्द्धीकोपिनविश्रुतःश्रुतिधरोधोईकविक्ष्मापतिः ४

कथिरन्यग्रंथेभ्योमद्ग्रंथेबहवोगुणाःसंतीतिद्योतयन्शार्दूलविक्रीडितेनाह वाचइति उमापतिधरःनामकविर्वाचःवचनानिपल्लवयतिविस्तारयति नतुगुणान् संदर्भशुद्धितः शब्दतश्चग्रथनाविशुद्धिंजयदेवएवपरंजानीते नान्यइत्यर्थः॥ शरणःनामकवि.दुरूहद्रुतेःविषमग्रंथस्यशीघ्रोच्चारतःश्लाघ्यः स्तुत्यः शृंगारेति शृंगारोत्तरगिशृंगारप्रधानानिसंति उत्कष्टानिप्रमेया निवावचानिरचनैःप्रबंधैःआचार्यगोवर्द्धनःस्पर्द्धिकोऽपिनविश्रुतः आचार्य गोवर्द्धनःकविःशृंगारप्रधानमेवप्रबंधंकरोतीत्यर्थःधोईनामकाविक्ष्मापतेःक विराजःश्रुतिधरःश्रुत्याश्रवणमात्रेणैवधारयातिनपुनरर्थादिग्रहणेप्रवीणः तिराजपदेनमहाहंकारकथनं

॥ मालवरागेणरूपकतालेगीयते ॥

प्रलयपयोधिजलेधृतवानसिवेदं ॥ विहितवहित्रचारित्रम खेदं ॥ केशवधृतमीनशरीरजयजगदीशहरे ॥ १ ॥

कविरधुनाभक्तानुग्रहार्थंविघ्नाभावार्थंचदशावतारवर्णनमाह प्रलयेत्या दिजगदीशइत्यंतं अस्यगीतस्यमालवरागः रूपकतालःतल्लक्षणं नितं बिनीचुंबितवक्रपद्मःशुकद्युतिःकुंडलवान्किरीटी संकेतशालांप्रविशन्प्रदोषे मालाधरोमालवरागराजः १ रूपकेस्यात्द्रुतंलघुरिति हेकेशव. धृतंमीनस्यशरीरवेदोद्धारणार्थंयेनसः हेजगदीशहेहरेजयउत्कर्षेणवर्द्ध स्व कस्मादित्यतआह त्वंप्रलयपयोधिजले कल्पांतसमुद्रजलेनिमग्नवेदंधृत वानासि कथंअखेदं अपरिश्रमंयथाभवतितथा पुनःकथंयथास्यात्तथाविहिते ति विहितंकृतंचारित्रंसमुद्रतरणकारणनौकाचेष्टितंयत्रक्रियाया

॥ क्षितिरतिविपुलतरेतवतिष्ठतिपृष्ठे ॥ धरणिधरणकिण चक्रगरिष्ठे ॥ केशवधृतकच्छपरूपजयजगदीशहरे ॥ २ ॥

॥ क्षितिरिति हेकेशवधृतंकच्छपस्यरूपयेनसःतत्संबोधनंहेजगदीशहेहरेजय

पूर्ववत् तवपृष्टेक्षितिःपृथ्वीतिष्ठतीत्यन्वयःकथंभूतेपृष्ठेअतिविपुलतरेअतिक्रांतःविपुलतरपदार्थयेन पुनःकथंभूते धरण्याःक्ष्मायाधरणेनवहनेनयत्कीण चक्रंमृतापिंडस्तेनगरिष्ठेदृढे

॥ वसतिदशनशिखरेधरणीतवलग्ना ॥ शशिनिकलंककलेवनिमग्ना ॥ केशवधृतसूकररूपजयजगदीशहरे ॥ ३ ॥

वसतीतिहेकेशवेत्यादिपूर्ववत् धृतंसूकरस्यरूपंयेनतवदशनाशिखरेदंताग्रभागेधरणीःपृथ्वीलग्नासंबद्धावसति तत्रदृष्टांतःकेव शशिनिचंद्रेनिमग्नाअंतस्थिताकलंककलेवकलंकरेखेव

॥ तवकरकमलवरेनखमद्भुतशृंगं ॥ दलितहिरण्यकशिपुतनुभृंगं ॥ केशवधृतनरहरिरूपजयजगदीशहरे ॥ ४ ॥

तवेति हेधृतंनरहरेः रूपंनरसिंहस्यस्वरूपंयेनतत्संबोधनं तवकरकमलवरेहस्तपद्मश्रेष्ठेनखमस्तीत्यध्याहारः कथंभूतंनखं अद्भुतशृंगंआश्चर्यकरशृंगमग्रभागोयस्य अद्भुतत्वेहेतुमाह दलितः विदारितःहिरण्यकशिपोर्दैत्यस्यतनुरेवभृंगोभ्रमरोयेन अन्यत्रभ्रमरेणकमलोदल्यतेइहतुवैपरीत्येनाश्चर्यं

॥ छलयसिविक्रमणेबलिमद्भुतवामन ॥ पदनखनीरजनितजनपावन ॥ केशवधृतवामनरूपजयजगदीशहरे ॥ ५ ॥

छलयसीति धृतंवामनस्यरूपंयेन हेअद्भुतवामन आश्चर्यहेतुवामनत्वं विक्रमणेपादविक्षेपेकर्तव्येबलिंअसुरंछलयसिप्रवंचयसिकीदृशस्त्वमितिसंबोधनं पदेति पदनखनीरेण पदनखाग्रसंबंधिजलेनगंगारूपेणजनितंकृतंजनपावनंलोकपावित्र्यंयेन

॥ क्षत्रियरुधिरमयेजगदपगतपापं ॥ स्नपयसिपयसिशमितभवतापं केशवधृतभृगुपतिरूपजयजगदीशहरे ॥ ६ ॥

क्षत्रियेति हेधृत भृगुपतिरूपधृतपरशुरामरूप क्षत्रियरुधिरमयेपयसिजग
तूत्लपयसीत्यन्वयःक्षत्रियाणांशोणितविकारेजलेजगत्स्नापयसि स्नानेनफ
.लमाह कथंभूतंजगत् अपगतपापंगतकल्मषं पुनःकथंभूतंशमितभवतापंदू
रीकृतसंसारतापं :

॥ वितरसिदिक्षुरणेदिक्पतिकमनीयं ॥ दशमुखमौलिबलिं
रमणीयं ॥ केशवधृतरघुपतिरूपजयजगदीशहरे॥ ७ ॥

वितरसीति हेधृतरामशरीर त्वंरणेसंग्रामे दशमुखमौलिबलिंरावण
मस्तकोपहारंदिक्षुदिशासुवितरसिददासि कीदृशंदिक्पतिकमनीयंइंद्रादी
नांकाम्यंइच्छाविषयमित्यर्थः रमणीयंमनोहरंदिक्षुदशदानात्

॥ वहसिवपुषिविशदेवसनंजलदाभं ॥ हलहतिभीतिमिलि
तयमुनाभं ॥ केशवधृतहलधररूपजयजगदीशहरे ॥ ८ ॥

वहसीति हेधृतहलधररूपधृतबलभद्ररूप त्वंवपुषिवसनंवस्त्रंधारयसि क
थंभूतंवपुषि विशदेशुभ्रे कथंभूतंवसनं जलदाभंसजलमेघसदृशं पुनःक
थंभूतहलहतिभीत्यालांगलघातभयेनमिलिता उपस्थितायायमुनातद्वत् आ
भादीप्तिर्यस्यतनूभयेनातिश्यामवंभवति

॥ निंदसियज्ञविधेरहहश्रुतिजातं ॥ सदयहृदयदर्शितप
शुघातं ॥ केशवधृतबुद्धशरीरजयजगदीशहरे ॥ ९ ॥

निंदसीति हेधृतबुद्धशरीरधृतबुद्धावतार हेसदयहृदयदयासहितांतः
करणजय ननुवेदानिंदकस्यकथंस्तुतिरित्यतआह त्वंयज्ञविधेःक्रतुविधान
संबंधिश्रुतिजातंवेदवाक्यसमूहं निंदसिदूषयसि नतुसर्वमित्यर्थः सोपि
किमितिनिंद्यतेइत्यतआह अहहकष्टंदयायांवा दर्शितःबोधितःपशूनांघातोव
धोयेनतादृशं वेदोपिपशूनांघातंबोधयतीत्यतअहोकष्टमित्येवनिंदयसीतिभावः

॥ म्लेच्छनिवहनिधनेकलयसिकरवालं ॥ धूमकेतुमिवकिमपिकरालं ॥ केशवधृतकल्किशरीरजयजगदीशहरे ॥ १०॥

हेधृतकल्किशरीरधृतकल्क्यवतारशरीर तच्चेष्टितमाह त्वंम्लेच्छनिवहनिधनेम्लेच्छानांनिवहाः समूहास्तेषांनिधनेनाशनिमित्तंकिमपिअनिर्वचनीयंकरवालंखड्गंकलयसिधारयासिकथंभूतंकरवालं धूमकेतुमिवऔत्पातिकतारकापातमिवकरालंभयानकं अथवाधूमकेतुरग्निस्तं

॥ श्रीजयदेवकवेरिदमुदितमुदारं ॥ शृणुसुखदंशुभदंभवसारं ॥ केशवधृतदशविधरूपजयजगदीशहरे ॥ ११ ॥

॥ इतिश्रीगीतगोविंदेप्रथमःप्रबंधः ॥ १ ॥

धृतवामसौम्यादिभिर्वर्त्तमानप्रयोगैरवताराणांभगवतश्चलीलायाःनित्यत्वंदर्शितंएवंतत्तदवतारगुणैःस्तुतिंकृत्वासंप्रत्यवतारिणंस्तुवन्प्रार्थयते श्रीजयदेवेति हेकेशवधृतानिदशविधानिरूपाणियेन तत्संबोधनं श्रीजयदेवकवेःइदंगीतंउदितंभाषितंशृणु आकर्णयेतिभक्तजनंप्रत्युक्तिः कीदृशंउदारंमनोहरंमुश्राव्यत्वात्शुभदंकल्याणदायकंभवसारंसंसारेधनरूपं

॥ वेदानुद्धरतेजगन्निवहतेभूगोलमुद्बिभ्रतेदैत्यंदारयतेबलिंछलयतेक्षत्रक्षयंकुर्वते ॥ पौलस्त्यंजयतेहलंकलयतेकारुण्यमातन्वतेम्लेच्छान्मूर्छयतेदशाकृतिकृतेकृष्णायतुभ्यंनमः १

उक्तानेवावतारान्पुनःसंक्षेपेणकीर्तयाति वेदानिति तुभ्यंकृष्णायनमःअस्तुइत्यन्वयः कथंभूताय वेदानुद्धरतेमीनरूपेण पुनःकथंभूताय जगन्निवहतेधारयतेकूर्मरूपेण भूगोलंपृथ्वीचक्रंउद्बिभ्रतेऊर्ध्वंधारयतेवाराहरूपेण दैत्यंहीरण्यकशिपुंदारयतेनृसिंहरूपेण बलिंदैत्यंछलयतेवंचयतेवामनरूपेण

क्षत्रक्षयंक्षत्रियनाशंकुर्वतेपरशुरामरूपेण पौलस्त्यंरावणंजयतेरामरूपेणहलं लांगुलंकलयतेधारयतेबलभद्ररूपेण कारुण्यंदयांआतन्व तेविस्तारयतेबुद्ध रूपेण म्लेच्छान्अंत्यजान्मूर्छयतेनाशयतेकल्किरूपेण अतएवदशाकृतिकृते दशाविधरूपधारिणे

॥ गुर्जरीरागेणप्रतिमंठतालेगीयते ॥

॥ श्रितकमलाकुचमंडलधृतकुंडलए ॥

॥ कलितललितवनमाल जयजयदेवहरे ॥ १॥

कविरिदानींगुर्जरीरागेणकृष्णंस्तौतीतिरागलक्षणं श्यामास्तुकेशीमलय द्रुमाणांमृदुल्लसत्पल्लवतल्पयंतीं श्रुतेःस्वराणांदधतींविभागंतंत्रीमुखादक्षि णगुर्जरीयांइति श्रितेतिहेदेवहेहरेजयजयस्वभक्तपक्षपातेसर्वोत्कर्षेणवर्द्धस्व श्रितेत्यादीनिसप्तपद्याःपदानिसंबोधनानिज्ञातव्यानि एइतिपदंहेइत्यर्थःहे श्रितकमलाकुचमंडलाश्रितंआश्रितंकमलायाःलक्ष्म्याःकुचमंडलंस्तनमंडलंये नहेधृतकुंडलधृतेकुंडलेयेनतस्यसंबोधनेकलितेति कलिताधृताललितासुं दरवनमालापुष्पदामयेन

॥ दिनमणिमंडलमंडनभवखंडनए ॥

॥ मुनिजनमानसहंस ॥ जयजयदेवहरे ॥ २ ॥

दिनमणीति हेदिनमणिमंडलमंडनसूर्यमंडलालंकारहेभवखंडनभक्तानांसं सारनाशक हेमुनिजनमानसहंस मुनिजनानांमानसहंसइव मानसेसर सिहंसोऽस्ति जयजयेतिपूर्ववत्

॥ कालीयविषधरगंजनजनरंजनए ॥

॥ यदुकुलनलिनदिनेश ॥ जयजयदेवहरे ॥ ३ ॥

कालियेति कालियनाम्नःसर्पस्यगंजनहिंसकहेजनरंजन यदुकुलेतिया दवकुलकमलसूर्य

॥ मधुमुरनरकविनाशनगरुडासनए ॥
॥ सुरकुलकेलिनिदान ॥ जयजयदेवहरे ॥ ४ ॥

मधुमुरेति मधुमुरनरकसंज्ञानांदैत्यानांनाशन गरुडाशनगरुडएवआसनंयस्य सःसुरकुलेति. सुरकुलानांदेवसमूहानांकेलेःक्रीडायाःसुखस्येतियांवत्निदानआदिकारण

अमलकमलदललोचनभवमोचनए ॥
त्रिभुवनभुवननिधान ॥ जयजयदेवहरे ॥ ५ ॥

अमलेति अमलकमलवत्तानिर्मलपद्मपत्रवत्लोचनेयस्य भवमोचन संसारभंजक त्रिभुवनेति त्रिभुवनमेवभवनंग्रहंतत्रनिधानमिवनिधिरिव

॥ जनकसुताकृतभूषणजितदूषण ॥
॥ समरशमितदशकंठ ॥ जयजयदेवहरे ॥ ६ ॥

जनकेति जनकसुतायाःसीतायाःकृतभूषण कृतालंकार जितोदूषण नामाराक्षसोयेन समरेति समरेसंग्रामेशमितोमारितोदशकंठोरावणोयेन ६

॥ अभिनवजलधरसुंदरधृतमंदरए ॥
॥ श्रीमुखचंद्रचकोर ॥ जयजयदेवहरे ॥ ७ ॥

अभिनवेति अभिनवजलधरसुंदरधृतमंदर धृतमंदराचलश्रीमुखंलक्ष्मीमुखमेवचंद्रस्तत्रचकोरइव

॥ तवचरणेप्रणतावयमितिभावयए ॥
कुरुकुशलंप्रणतेषु ॥ जयजयदेवहरे ॥ ८ ॥

तवेति. एवंभूतहेहरे जयजयतितवचरणेवयंप्रणताःअतीवनम्राःभावयजानीहि प्रणतेषुमादृशेषुकुशलंकल्याणंकुरु,

॥ श्रीजयदेवकवेरिदंकुरुतेमुदए ॥ मंगलमुज्वलगीति ॥

॥ जयजयदेवहरे ॥ ९ ॥

॥ इतिश्रीगीतगोविंदेद्वितीयप्रबंधः ॥

श्रीजयदेवेति हेदेवहेहरेजयजयेतिप्रर्थयते श्रीजयदेवकवेः इदंउदितंमंगल गीतविशेषः मुदंहर्षंकुरुते शृण्वतांभक्तानामितिशेषः कथंभूतंइदंमंग लंउज्वलगीतंतदनुगमनेरम्यंगीतंगानंयस्मिन्

॥ पद्मापयोधरतटीपरिरंभलग्नकाश्मीरमुद्रित

मुरोमधुसूदनस्य ॥ व्यक्तानुरागमिवखेलद

नंगखेदस्वेदांबुपूरमनुपूरयतु प्रियंवः ॥ १ ॥

अधुनाकविःकामोद्दीपकत्वात्वसंतस्यव्याजेनकृष्णक्रीडांवक्तुंभक्तान्प्रतिआ शिषंब्रूते पद्मेति मधुसूदनस्यउरो वक्षःस्थल वःयुष्माकंप्रियमभीष्टम नुपूरयतुसंपूर्णंकरोतु कथंभूतंमधुसूदनस्यउरः पद्मेति पद्मायाःलक्ष्म्याःप याधरतटीस्तनपरिसरस्तस्यपरिरंभणेनआलिंगनेनलग्नयंत्काश्मीरंकुंकुमंके शरंतेनमुद्रितंचिन्हितं ममैवेदंवक्षःस्थलंनान्यस्येतिभावः पुनःकथंभूतमिव व्यक्तानुरागमिव पुनःकथंभूतंउरः खेलदिति, खेलन्खेलनगतिंकुर्वन्योऽ नंगस्तस्यखेदेनसुरतायासेनस्वेदांबुपूरोघर्मजलप्रवाहोयत्र

॥ वसंतेवासंतीकुसुममुकुमारैरवयवैर्भ्रमंतींकांतारेबहुवि

हितकृष्णानुसरणं ॥ अमंदंकंदर्पज्वरजनितचिंताकुल

तयाचलद्बाधांराधांसरसमिदमूचेसहचरी ॥ २ ॥

अधुनाविरहोत्कंठितायाःराधायाःकाचित्सखीकृष्णवार्तांवक्तुमाह वसंतइ ति वसंतकालेकाचित्सहचरीसखीतविलासवक्ष्यमाणंराधांप्रत्युचेअवदत् कथंभूताराधां वासंतिकुसुमसुकुमारैर्माधवीपुष्पकोमलैरवयवैरंगैरुपलक्षितां उपलक्षणेतृतीया कथंभूताराधांकांतारेदुर्गमेवर्त्मनिभ्रमंतीं पुनःकथंभूतांबहुविहितंवारंवारंदूतिद्वारेणकृतंकृष्णानुसंधानंयया पुनःकथंभूतांअमंदंउत्कंठंयथास्यात्तथाकंदर्पज्वरेणजनिताउत्पादितायाचिंतातत्कृतायाआकुलतातयाकृताचलंतीउद्गच्छंतीबाधापीडायस्याः

॥ वसंतरागेणरूपकतालेगीयते ॥

॥ ललितलवंगलतापरिशीलनकोमलमलयसमीरे ॥

॥ मधुकरनिकरकरंबितकोकिलकूजितकुंजकुटीरे ॥ १ ॥

॥ विहरतिहरिरिहसरसवसंते ॥ नृत्यतियुवति

जनेनसमंसखिविरहिजनस्यदुरंते ॥ ध्रु० ॥

पूर्वोक्तमर्थंगीतेनाह ललितेति एतस्यवसंतरागःरूपकतालःतल्लक्षणं शिखंडबर्होच्चयबद्धचूडःपुष्णन्पिकंचूतलतांकुरेण भ्रमन्मदावासमनंगमूर्तिर्मत्तोमतंगस्यवसंतराग इति हेसखिहरिःइहसरसवसंतेविहरति युवतिजनेनसमंनृत्यतिचेतिध्रुवगतपदेनान्वयः हेराधेहरिःकृष्णइहअस्मिन्मनोहरवसंतसमयेक्रीडतिकामिनीसमूहेनसहनर्त्तनंकरोतिच कुत्रस्थलेइत्यपेक्षायांसमपदास्थितंवृंदावनविपिनशब्देनान्वयः कीदृशेवसंतसमयेलालितेत्यादिसप्तपदिपदानिवसंतसमयेविशेषणानि ललितायाःमनोहरायाःलवंगलतायाःलवंगशाखायाःपरिशीलनेनसंपर्केणकोमलोगंधमनोहरमलयसमीरोमलयानिलोयत्र अनेनवायोःसुगंधत्वेनशीतत्वादीन्युक्तानि मधुकरेति मधुकरनिकरेणभ्रमरसमूहेनकरंबितैर्मिश्रितैःकोकिलैर्कूजितःशब्दितःकुंजएवलताग्रहमेवकुटिरोऽल्पाकुटीयत्र

॥ उन्मदमदनमनोरथपथिकवधुजनजनितविलापे ॥
॥ अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे ॥ २ ॥

उन्मदेति उद्धतोमदमदनौहर्षकामौयत्रएवंभूतोमनोरथोयस्य एवंभूतो यःपथिकजनःपांथस्त्रीजनस्तेनोत्पादितोविलापःपरिदेवनंयत्र अलिकुलेति अलिकुलैःभ्रमरसमूहैःसंकुलोव्याप्तः कुसुमसमूहस्तेननिराकुलोऽस्तव्यस्तःबकुलानांवृक्षाणांकलापःसमूहोयत्र

॥ मृगमदसौरभरभसवशंवदनवदलमालतमाले ॥
॥ युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥ ३

मृगमदेति मृगमदस्यकस्तूरिकायाःसौरभरभसवशंवदासुरभितोत्साहस्यायत्तवादिनी नवानूतनादलमालापत्रपंक्तिर्येषांईदृशास्तमालायत्र नूतनपत्रस्तमालोमृगमदगंधमनुकरोतीति युवजनानांतरुणजनानांहृदयंविदारयति एवंविधोयोमनसिजःकंदर्पस्तस्ययानिनखानितद्वत् रुचिर्दीप्तिर्येषांएवंभुतानांकिंशुकानांपलाशपुष्पाणांजालंसमूहोयत्र

॥ मदनमहीपतिकनकदंडरुचिकेशरकुसुमविकाशे ॥
॥ मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे ॥ ४

मदनेति मदनमहीपतेः कामनृपस्यकनकदंडश्छत्रतद्वत्रुचिर्यस्य एवंभूतःकेशरकुसुमविकाशो नागकेशरपुष्पप्राचुर्य्यंयत्र मिलितेति मिलिताः शिली मुखाः भ्रमरायेषुतैःपाटलीपटलैः पाटलपुष्पसमूहैः कृतः स्मरतूणविलासःकामतूणीरचेष्टितंयस्मिन्तास्मिन्

॥ विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ॥
॥ विरहिनिकृंतनकुंतमुखाकृतिकेतकिदंतुरिताशे ॥ ५ ॥

विगलितेति विगलितस्यशिथिलावयवस्यअतएवलज्जितस्यजगतः अवलोकनेनदर्शनेनतरुणकरुणैः तरुणकरुणवृक्षैः पुष्पविकाशव्याजेनकृतोहासोहास्यंयत्र विरहीति विरहिनिकृंतनानिवियोगमारकानि कुंतमुखाकृतीनि भल्लमुखाकाराणियानिकेतकीपुष्पाणितैर्दंतुरिताव्याप्ताआशादिशोयस्मिन्तस्मिन्

॥ माधविकापरिमलललितेनवमालतिजातिसुगंधौ ॥
॥ मुनिमनसामपिमोहनकारिणितरुणाकारणबंधौ ॥ ६ ॥

माधविकेति माधविकायाःवासंतिलतायाःपरिमलनगंधेनललितेमनोहरे नवमालिकानिवारपुष्पाणिजातिःजातिपुष्पाणिताभ्यांसुगंधौ मुनिमनसामपिऋषिचित्तानामपिमोहनकारिणिमदनजनके तरुणानांयूनांअकारणबंधौ सहजामित्रे

॥ स्फुरदतिमुक्तलतापरिरंभणमुकुलितपुलकितचूते ॥
॥ वृंदावनविपिनेपरिसरपरिगतयमुनाजलपूते ॥ ७ ॥

स्फुरादिति वृंदावनविपिनेहरिःक्रीडतीत्यन्वयःस्फुरंत्याश्चलंत्याअतिमुक्तलतायाःपरिरंभणेनआलिंगनेन मुकुलितःपुष्पितःपुलकितःहृष्टःआम्रवृक्षोयत्रकथंभूते वृंदावनविपिने परिसरेति परिसरेपर्यंतभुविपरिगतंप्राप्तंयत्यमुनाजलंतेनपूतेपवित्रे

॥ श्रीजयदेवभणितमिदमुदयतिहरिचरणस्मृतिसारं ॥
॥ सरसवसंतसमयवनवर्णनमनुगतमदनविकारं ॥ ८॥
॥ इतिश्रीगीतगोविंदेतृतीयप्रबंधः ॥

श्रीजयदेवेति श्रीजयदेवकवेरिदंभणितंउदयंप्राप्नोतुइत्यर्थः हरि चरणयोः स्मृतिःस्मरणंसारो मुख्योयत्र सरसंसुमनोहरंवसंतसमयसंबंधिनो वनस्यवर्णनंयत्र अनुगतःअनुकृतःमदनविकारोकामविलासोयस्मिन्

॥ दरविगलितमल्लीवल्लिचंचत्परागप्रकटितपटवासैर्वा
सयन्काननानि ॥ इहहिदहतिचेतःकेतकीगंधबंधुः
प्रसरदसमबाणप्राणवद्गंधवाहः ॥ १ ॥

वियोगिनांदुःसहंवसंतवायुंवर्णयति दरेति इहवसंतेगंधवाहोवायुःवि रहिणांचेतःदहतीत्यन्वयः अर्थात्किंकुर्वन् दरविगलितायाईषद्विकसिता याःमल्याः मल्लिकायावल्लीपुलतासुचंचद्भिरुद्गच्छद्भिःपरागैःपुष्परजोभिःप्रक टितपटवासैःस्फुटीकृतपटवासचूर्णैः काननानिवनानिवासयन्सुरभीकुर्वन्पु नःकथंभूतः केतकीपुष्पाणांगंधस्यबंधुर्मित्रंप्रसरंतोयेअसमबाणाःकामबाणा स्तेषांप्राणवत्प्राणइव

॥ उन्मीलन्मधुगंधलुब्धमधुपव्याधूतचूतांकुर ॥
॥ क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ॥
॥ नीयंतेपथिकैःकथंकथमपिध्यानावधानक्षण ॥
॥ प्राप्तप्राणसमासमागमरसोल्लासैरमीवासराः ॥ २ ॥

वसंतवासराणामनंगोद्दीपकत्वमाह उन्मीलदिति अमीवसंतसंबंधिनोवा सराःदिवसाःपथिकैर्मार्गस्थैर्विरहिभिःकथंकथमपिकेनापिदुःखेननीयंते उ लंघ्यंते कथंभूताःवासराः उन्मीलदिति उन्मीलंश्चासौमधुगंधश्चपुष्परसगंध स्तत्रलुब्धायेमधुपाःभ्रमरास्तैर्व्याधूताकंपिताःयेचूतांकुराआम्रांकुरास्तेषुक्री डतांकोकिलानांकाकलीकलकलैः सूक्ष्माव्यक्तमधुरध्वनिकोलाहलैःकष्टज नकत्वेन उदीर्णःप्रकाशितः कर्णज्वरःश्रवणोपतापोयेषुकथंनीयतइत्यतआ ह ध्यानेनेचितनेअवधानंचित्तैकाग्र्यंतेनक्षणंअल्पकालंप्राप्तायाअनुभूतायाःप्रा णसमायाःसमागमरसेनसंबंधस्वरूपरसेनउल्लासोयेषांते ॥

॥ अनेकनारीपरिरंभसंभ्रमस्फुरन्मनोहारिविलासलालसं ॥
॥ मुरारिमारादुपदर्शयंत्यसौसखिसमक्षंपुनराहराधिकां ॥३॥

अनेकेति असौसखीराधिकां पुनराहइत्यन्वयः कथंभूतासखी आरा त्दूरेवर्त्तमानं समक्षंयथास्यात्तथाकृष्णंउपदर्शयंतीविषयंकारयंती कथंभूतं हरिं अनेकनारीणांपरिरंभसंभ्रमेणालिंगनादरेणस्फुरन्इतस्ततोगच्छन् मनोहारिमनोज्ञोयोविलासःक्रीडातत्रलालसःआदरवान्

॥ रामकरिरागेणरूपकतालेगीयते ॥

॥ चंदनचर्चितनीलकलेवरपीतवसनवनमाली ॥
॥ केलिचलन्मणिकुंडलमंडितगंडयुगस्मितशाली ॥ १ ॥
॥ हरिरिहमुग्धवधूनिकरेविलासिनिविलसतिकेलिपरे ॥

॥ ध्रुवपदं ॥

अमुमेवश्लोकोक्तमर्थंगीतेनाह चंदनेतिरामकरीरागः तस्यलक्षणं स्वर्णप्रभाभास्वरभूषणाचनीलंनिचोलंस्वतनौवहंती कांतोपदोपांतमाधि श्रितोपिर्मनोन्नतारामकरीप्रदिष्टाइति १ हेविलासिनिराधे इहमुग्ध

वधूनिकरे मनोहरकामिनीसमूहेहरिर्विलसतिक्रीडतीत्यन्वयः कथंभूते मुग्धवधूनिकरेकेलिपरेक्रीडातत्परे कथंभूतोहरिःचंदनेति चंदनेनमलयजेनचर्चितंरेखाकारेणानुलिप्तंनीलंकलेवरंशरीरंयस्य पीतंसुवर्णवर्णवसनंवस्त्रंयस्यवनमालायस्यास्तीति ततःप्रत्येकंकर्मधारयः पुनः कथंभूतः केलिनाक्रीडयाचलंती येमणियुक्तेकुंडलेताभ्यांमंडितंशोभितंगंडयुगंयस्य स्मितेनईषद्धास्येनशालतेशोभतेततःकर्मधारयः

॥ पीनपयोधरभारभरेणहरिंपरिरभ्यसरागं ॥
॥ गोपवधूरनुगायतिकाचिदुदंचितपंचमरागं ॥ २ ॥

पीनेति हेराधेकाचित्गोपवधूगोपांगनापीनपयोधरभरेणविपुलकुचगौरवातिशयेनसरागंयथापरिरभ्यआलिंग्यहरिंअनुपश्चादुद्र्कतंपंचमरागंगायतिगानंकरोति

॥ कापिविलासविलोलविलोचनखेलनजनितमनोजं ॥
॥ ध्यायतिमुग्धवधूरधिकंमधुसूदनवदनसरोजं ॥ ३ ॥

कापीति काचिन्मुग्धवधूर्मनोहरगोपांगनाअधिकातिशयेनमधुसूदनवदनसरोजंकृष्णस्यमुखांबुजंध्यायतिचिंतयति विलासेनविलोलयाविलोचनयोःखेलनेनसंचारेणजनितउत्पादितोमनोजःकामोयेनतत्

॥ कापिकपोलतलेमिलितालपितुंकिमपिश्रुतिमूले ॥
॥ चारुचुचुंबनितंबवतीदयितंपुलकैरनुकूले ॥ ४ ॥

कापिकपोलेति कापिनितंबवतीगोपांगनादयितंकृष्णंकपोलतलेगंडदेशेचारुमनोज्ञयथास्यात्तथाचुचुंबचुंबितवती कथंभूता किमपिकार्यंलपितुंवक्तुंश्रुतिमूलेकर्णप्रदेशेमिलितासंलग्ना कीदृशेकपोलतले पुलकैरोमोद्गमैःअनुकूलेप्रेमप्रियकथने

॥ केलिकलाकुतुकेनचकाचिदमुंयमुनाजलकूले ॥
॥ मंजुलवंजुलकुंजगतंविचकर्षकरेणदुकूले ॥ ५ ॥

केलीति काचिद्गोपी केलिकला कुतुकेनशृंगाररसक्रीडातात्पर्येणहेतुनाकरेण हस्तेनामुंकृष्णदुकूलेवस्त्रेविचकर्ष आकृष्टवती कथंभूतंअमुं यमुनाजलकूले यमुनाजलोपलक्षितेकूलेतीरेमंजुलोमनोहरोयोवंजुलकुंजोवेतसलतागृहं तत्र गतंवर्तमानं

॥ करतलतालतरलवलयावलिकलितकलस्वनवंशे ॥
॥ रासरसेसहनृत्यपराहरिणायुवतिप्रशशंसे ॥ ६ ॥

करतलेति काचित्युवतिर्गोपांगनाहरिणाकृष्णेनप्रशशंसेस्तुता रासरसेगोपक्रीडानुरागेसहनृत्यपराकृष्णसमकालंनृत्यति कथंभूतेरासरसे करतलयोर्हस्तयोस्तालेनचपटध्वनिना तरलयाचंचलयावलयावल्याकंकणपंक्त्याकलितःमिश्रितः कलस्वनवंशोऽव्यक्तमधुरशब्दसहितोवंशोवेणुर्यत्र

॥ श्लिष्यतिकामपिचुंबतिकामपिरमयतिकामपिरामां ॥
॥ पश्यतिसस्मितचारुतरामपरामनुगच्छतिवामां ॥ ७ ॥

श्लिष्यतीति हेराधे श्रीकृष्णः कामपिगोपिकांश्लिष्यतिआलिंगतितथाकामपिचुंबतितथाकामपिरामांरमयतिक्रीडयति अपरांनायिकांस्मितचारुहसमनोहरंयथास्यात्तथापश्यति अपरांवामांसुंदरीमनुगच्छतीत्यर्थः

॥ श्रीजयदेवकवेरिदमद्भुतकेशवकेलिरहस्यं ॥
॥ वृंदावनविपिनेललितंवितनोतुशुभानियशस्यं ॥ ८ ॥
॥ इतिश्रीगीतगोविंदेचतुर्थःप्रबंधः ॥

श्रीजयदेवेतिश्रीजयदेवकवेरिदंगीतं शुभानिकल्याणानिवितनोतुअर्थात्

भक्तानांगीतं कीदृशंअद्भुतंआश्चर्यकरं केशवस्यकृष्णस्यकेलिरहस्यंक्रीडाह र्षोयत्र अद्भुतत्वंयुगपत्सर्वासांप्रीत्युत्पादनात् वृंदावनविपिनेवृंदावनना म्निवने ललितंनानारसान्वितमित्यर्थः यशस्यंयशसेहितंयशस्करमित्यर्थः

॥ विश्वेषामनुरंजनेनजनयन्नानंदमिंदीवर ॥
॥ श्रेणीश्यामलकोमलैरुपनयन्नंगैरनंगोत्सवं ॥
॥ स्वच्छंदंव्रजसुंदरीभिरभितः प्रत्यंगमालिंगितः ॥
॥ शृंगारःसखिमूर्तिमानिवमधौमुग्धोहरिःक्रीडति ॥ १ ॥

विश्वेषामिति हेसखिराधेमधौवसंते मुग्धोमनोहरोहरिःकृष्णः क्रीडतीत्य न्वयः कइव मूर्तिमान्शरीरधारीशृंगाररसइव किंकुर्वन् अनुरंजनेनअनुरा गेणविश्वेषांसर्वेषांभक्तानांआनंदं ततोषंजनयन् पुनःकिंकुर्वन् इंदीवरश्रेणि नांकोमलातद्वत्श्यामलकोमलैःकृष्णमनोहरै रंगैरवयवैः अनंगोत्सवंकामहर्षंउ पनयन् उत्पादयन् पुनःकथंभूतःस्वच्छंदं स्वेच्छयाव्रजसुंदरीभिःगोपीभिःअभि तःसर्वतोभावेनप्रत्यंगंप्रत्यवयवंनआलिंगितः गोपीभिरालिंगनेययायदंगंप्राप्तं तयातदेवालिंगितमितिभावः श्यामोभवतिशृंगारःसितोहासःप्रकीर्त्तितइति शृंगारविशेषणान्यप्येतानिपदानि

॥ अद्योत्संगवसद्भुजंगकवलक्लेशादिवेशाचलं ॥
॥ प्रालेयप्लवनेच्छयानुसरतिश्रीखंडशैलानिलः ॥
॥ किंचित्स्निग्धरसालमौलिमुकुलान्यालोक्यहर्षोदया ॥
॥ दुन्मीलंतिकुहुःकुहूरितिकलोत्तालाःपिकानांगिरः ॥ २ ॥

मलयानिलस्यदुःसहत्वेकारणमाह अद्येति हेराधे अद्यइदानींवसंतसमये श्री खंडशैलानिलः मलयजपवनःउत्संगेक्रोडेवसंतोयेभुजंगासर्पास्तेषांकवलक्ले शादिवग्रासोपतापादिव ईशाचलंहिमाचलंप्रालेयप्लवनेच्छया तुहिनमज्जनेच्छ यानुसरतिअनुगच्छतिकिंच पक्षांतरेपिकानांगिरोवाण्यःस्निग्धरसालमौ लिमुकुलानिकोमलचूतस्तंबककुड्मलानि आलोक्यदृष्ट्वाहर्षोदयात् आनं दोदयात् उन्मीलंतिउद्गच्छंतिकथंभूतागिरः कुहुःकुहूरितिकलोत्तालाःकुहु कुहूरित्याकारेणाव्यक्तमधुरशब्देनोत्तालाःप्रकाशाः

॥ रासोल्लासभरेणविभ्रमभृतामाभीरवामभ्रुवा ॥

॥ मभ्यर्णपरिरभ्यनिर्भरमुरःप्रेमांधयाराधया ॥

॥ साधुत्वद्वदनंसुधामयमितिव्याहृत्यगीतश्रुति ॥

॥ व्याजादुद्भटचुंबितःस्मितमनोहारीहरिःपातुवः ॥ ३ ॥

॥ इतिश्रीगीतगोविंदेमहाकाव्येकविराजश्रीजयदेवकृते ॥

॥ सामोददामोदरोनामप्रथमःसर्गः ॥ १ ॥

कविःकथोपक्रमंत्यक्त्वा लोकानाशिषयति रासोल्लासेति हरिः कृष्णः वःयु ष्मान्पातुइत्यन्वयःकथंभूतोहरिः रासोल्लासभरेणगोपीक्रीडायांहर्षातिशयेन विभ्रमभृतांशृंगारविलासधारिणीनां आभीरवामभ्रुवांगोपिकानां अभ्यर्णे समीपंनिर्भरंगाढंयथातथाउरःवक्षः स्थलं परिरभ्यआलिंग्यराधयाउद्भटंप्रक टंयथास्यात्तथागीतस्तुतिव्याजात्गानप्रशंसाछलेनचुंबितः नतुभवतुताः सविभ्रमः प्रत्यक्षंयुवतिगणंपश्यंत्यातयाकथंचुंबितस्तत्राहप्रेमांधयाप्रेम्णाह र्षातिशयेनांधयाकृष्णंविनान्यमपश्यंतीतितयाकिंकृत्वा त्वद्वदनंत्वन्मुखंसुधा

मयममृतमयंसाधुशोभनं इतिव्याहत्यउक्का कथंभूतोहरिःस्मितमनोहारी राधायाःचुंबनकौशलंदृष्ट्वा स्मितेनईषद्धास्येनमनोहर्तुंशीलंयस्यसः

॥ विहरतिवनेराधासाधारणप्रणयेहरौ ॥
॥ विगलितनिजोत्कर्षादीर्ष्यावशेनगतान्यतः ॥
॥ क्वचिदपिलताकुंजेगुंजन्मधुव्रतमंडली ॥
॥ मुखरशिखरेलीनादीनाप्युवाचरहःसखीं ॥ १ ॥

विहरतीति राधारहःएकांतेसखींउवाच कथंभूताराधा वनेवृंदावनेहरौ कृष्णेविहरतिक्रीडतिसति विगलितनिजोत्कर्षात् गतनिजभाग्यात् ईर्ष्यावशेन असहिष्णुतया अन्यतोन्यस्मिन्स्थलेगताकथंभूतेहरौ साधारणप्रणये अन्यगोपीतुल्यप्रेम्णि अतएवक्वचिदपिलताकुंजेलतागृहेलीनागुप्ता कथंभूतेकुंजे कूजतांगंभीरंशब्दंकुर्वतां मधुव्रतानांभ्रमराणांमंडल्या समूहेनमुखरशिखरेशब्दायमानाग्रभागेअतएवदीनापिदुःखितापि

॥ गुर्जरीरागेणरूपकतालेगीयते ॥
॥ संचरदधरसुधामधुरध्वनिमुखरितमोहनवंशं ॥
॥ चलितदृगंचलचंचलमौलिकपोलविलोलवतंसं ॥ १ ॥
॥ रासेहरिमिहविहितविलासं स्मरतिमनोममकृतपरिहासं ॥
॥ ध्रुवपदं ॥

श्लोकोक्तमर्थंगीतेनाह संचरदिति हेसखिममंमनःहरिंस्मरति गोचरंकरोति सर्वानुभूतविषयत्वात्कथंभूतं हरिंसंचरता उद्गच्छता अधरसुधया मधुरेण अधरा

मृतमनोहरेणध्वनिनाशब्देन मुखरितःशब्दितोमोहननामावंशोयेन पुनःकीदृ
शंचालतोतिचलितःआवर्जितःदृगंचलःकटाक्षोयेनचंचलःदोलायमानोमौलिः
शखरोयस्य कपोलयोर्गंडस्थलयोर्विलोलौचंचलौवतंसौकर्णाभरणेयस्यतंत
तःप्रत्येकंकर्मधारयःपुनःकीदृशं इहरासेगोपीक्रीडायांविहितःकृतःविलासोक्री
डायेनंमधासहकृतःपरिहासःनर्मोयेनतं

॥ चंद्रकचारुमयूरशिखंडकमंडलवलयितकेशं ॥
॥ प्रचुरपुरंदरधनुरनुरंजितमेदुरमुदिरसुवेशं ॥ १ ॥

चंद्रकेति चंद्रकेणविचित्रवर्णचिन्हेनचारूणांमयूरशिखंडकानांमयूरपिछा
नांमंडलेनसमूहेन वलयिताःवलयाकारेणवेष्टिताःकेशाःयेन अतएवप्रचुरे
णविस्तीर्णेनपुरंदरधनुषाइंद्रधनुषाअनुरंजितश्चित्रितोमेदुरोनिबिडःस्निग्धो
योमुदिरोमेघस्तद्वत्सुवेशंसुंदरं

॥ गोपकदंबनितंबवतीमुखचुंबनलंबितलोभं ॥
॥ बंधुजीवमधुराधरपल्लवमुल्लसितस्मितशोभं ॥ २ ॥

गोपेति गोपकदंबस्यगोपसमूहस्यनितंबवतीनांस्त्रीणांमुखचुंबनेनलंबितः
लोभोयेन पुनःकीदृशं बंधुजीवपुष्पवत्मधुरोमनोहरोऽधरपल्लवोओष्टपल्लवो
यस्य उल्लसितेनविकाशितेनस्मितेनशोभायस्यतं

॥ विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रं ॥
॥ करचरणोरसिमणिगणभूषणकिरणविभिन्नतमिस्रं ॥ ४॥

विपुलेति विपुलाः बहुलाः पुलकारोमोद्गमाययोस्ताभ्यांभुजपल्लवाभ्यां

वलयितंवेष्टितं बल्लवानांआभीराणांयुवतीसहस्रंगोपिकावृंदंयेन पुनः कीदृशं कौचरणौउरश्वरणावमाहरः करचरणोरस्तस्मिन्यत्त्नानामणिगणयुक्तभूषणानांकिरणोविनदीप्त्याविभिन्नंनाशितंतमिस्रमंधकारोयेनस:तं

॥ जलदपटलचलदिंदुविनिंदकचंदनतिलकललाटं ॥
॥ पीनपयोधरपरिसरमर्द्दननिर्द्दयत्द्दयकपाटं ॥ ५ ॥

जलदेति पुनःकीदृशंहरिं जलदपटलेमेघसमूहेचलतःइंदोश्चंद्रस्यविनिंदकंसमानंचंदनातिलकंचंदनकृततिलकंयत्रतादृशंललाटंयस्य अभूतोपमेयं क्वचिज्जलदपटलचलदिंदुविनिंदकचंदनाबिंदुललाटमितिपाठःतदाजलदपटलेचलन्संचरन्यइंदुश्चंद्रस्तस्यविशेषेणनिंदकास्तरस्कारकः चंदनबिंदुमंडलाकारतिलकोललाटेयस्यतं पुनःकीदृशं पीनौमांसलौयौपयोधरौस्तनौतयोः परिसरस्यपर्यंतदेशस्यमर्द्दनेनिर्दयंदयारहितंह्रदयकपाटंकपाटवद्विस्तीर्णंह्रदयंयस्यतादृशं

॥ मणिमयमकरमनोहरकुंडलमंडितगंडमुदारं ॥
॥ पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारं ॥ ६ ॥

मणिमयेति मणिमयेनमणिरूपेणमकरवन्मनोहराभ्यांकुंडलाभ्यांमंडितोऽलंकृतोगंडोगंडस्थलंयस्य पुनःकीदृशंमहांतं उदारंअभीष्टदातारंवा पुनःकीदृशं पीतंवसनवस्त्रंयस्य महत्वमाह अनुगताआश्रितायेमुनिवराःशुकनारदादयःमनुजाःपरीक्षिदादयःसुरवराब्रह्मरुद्रादयः असुरप्रह्लादादयस्ते परिवाराःपरिजना यस्यतादृशं इंद्रांतेवरपदस्यतेषांवराइतिग्रहणं

॥ विशदकदंबतलेमिलितंकलिकलुषभयंशमयंतं ॥
॥ मामपिकिमपितरंगदनंगदृशामनसारमयंतं ॥ ७ ॥

विशदेति विशदकदंबतलेमिलितंउपस्थितं पुनःकीदृशंकलिकलुषात्कलिकालजातपापाद्भयंतंनाशयंतं पुनःकीदृशंमांअपि किंमपिअनिर्वचनीयंयथा स्यात्तथा तरंगन् उद्गच्छन्अंनगयोगोस्यांतादृशांदृष्टयामनसाहृदयेनचरमयंतं

॥ श्रीजयदेवभणितमतिसुंदरमोहनमधुरिपुरूपं ॥
॥ हरिचरणस्मरणंप्रतिसंप्रतिपुण्यवतामनुरूपं ॥ ८ ॥

॥ इतिश्रीगीतगोविंदेपंचमःप्रबंधः ॥ ५ ॥

श्रीजयदेवेति श्रीजयदेवभणितंपुण्यवतांभक्तानां हरिचरणयोःस्मरणंप्रतिअनुरूपयोग्यंभवतुइ यध्याहारःकथंभूतं अतिसुंदरंमोहनंमोहकारकं मधुरिपोःरूपंकृष्णस्यरूपंयस्मिन्

॥ गणयतिगुणग्रामंभ्रामंभ्रमादपिनेहतेवहतिचपरीतोषंदोषंविमुंचतिदूरतः ॥ युवतिषुचलत्तृष्णेकृष्णेविहारिणिमांविनापुनरपिमनोवामंकामंकरोतिकरोमिकिं ॥ १ ॥

इदानींराधायाःकृष्णेवसतश्चेतसोवश्यत्वमाह हेसखि ममयनश्चितं पुनरप्यधुनापिकृष्णंकामिमिच्छांकरोति किंकरोमिनिवृत्तौउपायांतरंनास्तीत्यर्थःयुवतिषुगोपीषुचलतृष्णे जाताभिलाषे पुनःकीदृशे मांविनाविहारिणिक्रीडाशीले कीदृशंमनःवामंअवश्यमित्यर्थःवामत्वेकारणमाहममनःअपराधस्यापिकृष्णस्यगुणग्रामंगुणसमूहंगणयतिभ्रमादपिभ्रामंविस्मरणंनेहतेनचेष्टते भ्राममपीतिपाठे

भ्रामंक्रोधंनेहतेनवांछति तद्गुणाकर्णनेनपरितोषंसंतोषंवहति दोषंमदीयाव
ज्ञादिकंदूरतएवमुंचतिपरित्यजति

॥ मालवरागेणएकतालीतालेगीयते ॥

॥ निभृतनिकुंजगृहंगतयानिशिरहसिनिलीयवसंतं ॥
॥ चकितविलोकितसकलदिशारतिरभसभरेणहसंतं ॥ १ ॥

॥ सखिहेकेशिमथनमुदारं ॥
॥ रमयमयासहमदनमनोरथभावितयासविकारं ॥

॥ ध्रुवपदं ॥

पुनरपिराधागीतेनसखीमाह निभृतेति हेसखित्वंकेशिमथनंकृष्णंमयासह रमयक्रीडांकारय कीदृशंकृष्णंउदारंमहांतं कथंभूतयामया मदनस्यम नोरथःइच्छास्मिन्भावोरत्याख्यःसंजातोयस्याः कथंभूतंकृष्णं सविकारंभाव सहितं कीदृश्यामया निभृतंगूढंयन्निकुंजंगृहंगतयाप्राप्तया कथंभूतंकृष्णं निशिरात्रौरहसिएकांतस्थलेनिलीयतिरोहितोभूयवसंतंतिष्टंतं कथंभूत यामया चकितंसभयंयथातथाविलोकितादृष्टाःसकलदिशायया पुनःकथं भूतंकृष्णंरतेरभसउत्साहस्तस्यभरेणआधिक्येनहसंतं सस्मितमुखं अस्मिन् गीतेपूर्वार्द्धंराधाविशेषणंउत्तरार्द्धंकृष्णस्येतिबोद्धव्यं

॥ प्रथमसमागमलज्जितयापटुचाटुशतैरनुकूलं ॥
॥ मृदुमधुरस्मितभाषितयाशिथिलीकृतजघनदुकूलं ॥ २

प्रथमेति प्रथमसमागमेनूतनसंभोगेलज्जितयालज्जायुक्तया कथंभूतंक ष्णंवैलक्ष्यदूरीकरणाय पटुचाटुशतानिकुशलानियानिचाटुशतानिस्तवशता

नितेरनुकूलंआनुकूल्यंकारकं मृदुकोमलंमधुरंस्मितपूर्वकंभाषितंयस्याः सातयाशिथिलीकृतंजघनदुकूलंजघनस्थितंपट्टवस्त्रंयेनतं

॥ किशलयशयननिवेशितयाचिरमुरसिममैवशयानं ॥
॥ कृतपरिरंभणचुंबनयापरिरभ्यकृताधरपानं ॥ ३ ॥

किशलयेति किशलयशयनेपल्लवकृतशय्यायांनिवेशितया कथंभूतंकृष्णंम मैवोरसिवक्षस्थलेचिरंशयानंकृतालिंगननित्यर्थः कथंभूतयामया कृतंपरिरंभ णपूर्वकंआलिंगनपूर्वकंचुंबनंयया सातया कथंभूतंकृष्णंपरिरभ्यआलिंग्यकृतं अधरपानओष्टपानंयेनसःतं

॥ अलसनिमीलितविलोचनयापुलकावलिललितकपोलं ॥
॥ श्रमजलसिक्तकलेवरयावरमदनमदादतिलोलं ॥ ४ ॥

अलसेति अलसेनसुरतसौख्येननिमीलितेमुद्रितेनेत्रेयस्याः सातयापुलकाव ल्यारोमांचपंक्त्यालिलितौमनोहरौकपोलौयस्यतं श्रमजलेनसुरतजनितेनवा रिणासिक्तंकलेवरंशरीरंयस्यास्तया वरमदनमदात्उत्तमकामजनितहर्षात् अतिलोलंअतिचंचलंसतृष्णमित्यर्थः

॥ कोकिलकलरवकूजितयाजितमनसिजतंत्रविचारं ॥
॥ श्लथकुसुमाकुलकुंतलयानखलिखितघनस्तनभारं ॥ ५

कोकिलेति कोकिलकलरववत् अव्यक्तध्वनिवत्कूजितंशब्दोयस्यास्तया जितःमनसिजस्यकामस्यतंत्रविचारःशास्त्रसिद्धांतोयेनसःतं श्लथाःशिथिलाः कुसुमैःपुष्पैराकुलाःव्याप्ताःकुंतलाःचूर्णकुंतलायस्याःसातया नखेनलिखि तश्चिन्हितोघनोनिबिडःस्तनभारोयेनसःतं

॥ चरणरणितमणिनूपुरयापरिपूरितसुरतवितानं ॥
॥ मुखराविशृंखलमेखलयासकुचग्रहचुंबनदानं ॥ ६ ॥

चरणेति चरणयोःपादयोःरणितौशब्दितौमणियुक्तनूपुरौयस्याः परिपूरितं संपूर्णकृतंसुरतवितानंसुरतसमूहोयेनतं मुखराःशब्दायमानाविशृंखलाउन्मुक्तामेखलाकांचीयस्याःसातयासकचग्रहंकचग्रहणसहितंचुंबनदानंयस्यतं

॥ रतिसुखसमयरसालसयादरमुकुलितनयनसरोजं ॥
॥ निःसहनिपतिततनुलतयामधुसूदनमुदितमनोजं ॥ ७ ॥

रतिसुखेति रतिसुखसमयेसुरतसुखकालेप्रीत्याअलसयाअलसयुक्तया दरमुकुलितनयनसरोजंईषन्मीलितनेत्रकमलं निःसहाअसमर्थनिपतितातनुलताशरीरलतायस्यास्तया कथंभूतंकृष्णं मधुदैत्यंसूदयतीतितं उदितः जातोमनोजःकामोयस्यतं

॥ श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलं ॥
॥ सुखमुत्कंठितराधिकयाकथितंवितनोतुसलीलं ॥
॥ इतिश्रीगीतगोविंदेषष्ठःप्रबंधः ॥ ६ ॥

श्रीजयदेवेति इदंश्रीजयदेवेनभणितं उक्तंगीतंकर्तृ सुखंपारलौकिकसुखानिऐहिकानिचवितनोतुविस्तारयतु केषांगायतांशृण्वतांच कथंभूतं श्रीजयदेवभणितं अतिशयमधिकंमधुरिपोःकृष्णस्यनिधुवनशीलंसुरतचारितंयस्मिन् पुनःकीदृशं उत्कंठितयागोपवध्वाराधिकयाकथितं सलीलंशृंगाररसक्रियासहितं

॥ हस्ताब्रस्तविलासवंशमनृजुभ्रूवल्लिमद्दल्लवी ॥
॥ वृंदोत्सारिदृगंतवीक्षितमतिस्वेदार्द्रगंडस्थलं ॥
॥ मामुद्वीक्ष्यविलज्जितस्मितसुधामुग्धाननंकानने ॥
॥ गोविंदंव्रजसुंदरीगणवृतंपश्यामिहृष्यामिच ॥ १ ॥

अधुनात्युत्कंठयासख्यानीयमानासागोपीगणवृतंकृष्णंदृष्ट्वापि वृत्यसखीमाह हस्तेति हेसखि गोविंदंअहंपश्यामिहृष्यामिहर्षंप्राप्नोमिचपश्यामीतिवर्तमानसामीप्याद्वर्तमानता कथंभूतंगोविंदंकाननेवृंदावने व्रजसुंदरीगणेनगोपीसमूहेनवृतंवाष्टितं ननुसपत्नीभिःपरिवृतंदृष्ट्वाकथंतेहर्षइत्यतआह मांउद्वीक्ष्य हस्ताद्धस्तत्रस्तःव्यस्तोविगालेतःविलासवंशोक्रीडावंशोयस्यतंअनृजुभ्रूवल्लीमतानां कुटिलभ्रूलतायुक्तानांगोपीनांसमूहे उत्सारिउर्द्ध्वंतिर्यग्गामिदृगंतेनकटाक्षेण वीक्षितमोक्षणमस्यतंमय्यागतायांभियाद्दगतचेष्टं अन्यगापरिपसारयतंमितिभावःअतिस्वेदेनातवर्मेणार्द्रंगंडस्थलंयस्यतं विलज्जितंस्मितंसलज्जाहास्यंतदेवसुधामृतंतयामुग्धाननंमनोहरंमुखंयस्यतं

॥ दुरालोकस्तोकस्तबकनवकाशोकलतिका ॥
॥ विकाशःकासारोपवनपवनोपिव्यथयति ॥
॥ अपिभ्राम्यद्भृंगीरणितरमणीयानमुकुल ॥
॥ प्रसूतिश्चूतानांसखिशिखरिणीयंसुखयति ॥ २ ॥

पुनःविभावयन्नाहदुरालोकेतिहे सखि दुरालोकयतेवियोगिनामुद्वेगजनितत्वात् स्तोकःस्वल्पस्तबकःगुच्छोयस्यनवाशोकलतिकायाः विकाशःउद्योतःमांव्यथयतिपीडयति किंच कासारेपंवनस्यतरोवरानिकटवनस्यपवनोपिमांव्यथयाति

कांतारइत्यनेनवायोः प्रोचंडपवनसंबंधित्वेनसौगंध्यंसूक्ष्मपतितगतित्वेनमांद्यं चश्वनितं अपिच चूतानामाम्राणांइयमकुलप्रसूतिः कलिकोद्भवोमानसंमु यति कथंभूताप्रसूतिः भ्राम्यतीनांचलंतीनांभ्रमरांगनानांरणितैः शब्दि तैः रमणीयामनोज्ञापीयद्यैः शिखरिणीप्रशस्ताग्रभागवतीभृंगीनांचल नंनायकान्वेषणार्थानितिध्वनितंशिखरिणीनामकंछंदइतीदं सूचितं

॥ साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित ॥

॥ भ्रूवल्लीकमलीकदर्शितभुजामूलार्द्धहस्तस्तनं ॥

॥ गोपीनांनिभृतंनिरीक्ष्यललितंकांचिच्चिरंचिंतय ॥

॥ न्नंतर्मुग्धमनोहरोहरतुवःक्लेशंनवःकेशवः ॥ १ ॥

॥ इतिश्रीगीतगोविंदेमहाकाव्येकविराजश्रीजयदेवकृते अक्लेशकेशवोनामद्वितीयःसर्गः ॥

अधुनाकविः श्लोकानाशिषयतिसाकूतेतिनवःशृंगाररसलक्षणोवाकेशवःवःयुष्मा कंभक्तानांक्लेशंदुःखंहरतुदूरीकरोतु कीदृशःसाकूतंसाभिप्रायस्मितमीषद्धा स्यंयत्र गोपीनांनिभृतंगोप्यभावंनिरीक्ष्यदृष्ट्वा कांचिद्दयितां अंतर्मनसि चिरंचिंतयन् मुग्धमनोहरःमोहयुक्तसुंदरः कथंभूतांनिभृतं आकुलाकुला त्यतास्तव्यस्तःगलन्पतन्मुक्तीभवन् धम्मिल्लः केशपाशायत्रउल्लासिताउ च्चैःकृताभ्रूवल्लीयत्रअलिकेनभ्रमणादिछलेनदर्शिताःभुजमूलार्द्धहस्तस्तनाः यस्मिन् भुजौबाहुमूलाभ्यामर्द्धहस्तौचस्तनौचेतिद्वंद्वः

॥ कंसारिरपिसंसारवासनाबंधशृंखलां ॥

॥ राधामाधायहृदयेतत्याजव्रजसुंदरीः ॥ १ ॥

एवंराधायाः विरहमुक्ताकृष्णस्यापिविरहव्ययांतस्यामाह कंसारिरपिकृ ष्णोपिराधांहृदयेमनसिअधायस्थाप्य व्रजसुंदरीगोपीस्तत्याजत्यक्तवान्कीदृ शोंराधां संसारेवासनासंस्कारस्तस्याबंधायशृंखलांनिगडरूपां सौंदर्यवती र्बह्वीरपितत्याजेतिराधायांकृष्णस्यानुरागातिशयोध्वनितः

॥ इतस्ततस्तामनुसृत्यराधिकामनंगबाणव्रणखिन्नमानसः ॥
॥ कृतानुतापःसकलिंदनंदिनीतटांतकुंजेनिषसादमाधवः ॥ २

पुनःकिंकृतवान् इतस्ततेति समाधवःकालिंदनंदिन्यायमुनायास्तटांतकुं जेतीरलतागृहेनिषसादस्थितवान् किंकृत्वा इतस्ततअनेकस्थानेषुतांरा धिकांअनुसृत्यान्वेष्य कीदृशः अनंगबाणव्रणेनकामशरक्षतेनखिन्नंदीनंमनो यस्यकृतोनुतापोपश्चात्तापोयेनसः

॥ गुर्जरीरागेणप्रतिमंठतालेगीयते ॥

॥ मामियंचलिताविलोक्यवृतंवधूनिचयेन ॥
॥ सापराधतयामयापिनवारितातिभयेन ॥ १ ॥
॥ हरिहरिहतादरतयागतासाकुपितेव ॥

॥ ध्रुवपदं ॥

कृतानुतापत्वमेवाहगीतेन मामिति गीतस्यास्यगुर्जरीरागः प्रतिमंठतालः तयोर्लक्षणंप्राक्कथितं हरिहरीति खेदानुकारेसाराधाहतादरतयाहतबहु मानत्वेनकुपितेवकोपंप्राप्तेवगताअन्यस्थानेगता ननुसाकुपितात्वयाकथंज्ञा तंतत्राह मांकृष्णंवधूनिचयेनगोपीसमूहेनवृतंवेष्टितंविलोक्यचलिता इतो

गता इतिभिन्नैववाक्यरचनातर्हिसागच्छंतीत्वयाननिवारितातत्राह मयापि कृष्णेनाभिसापराधतयाकृतापराधत्वेनहेतुनाअतिभयेनमवारिता यद्वाक थंभूतेनमयाअतिभयेनातिशयितंभयंयस्येति

॥ किंकरिष्यतिकिंवदिष्यतिसाचिरंविरहेण ॥

॥ किंजनेनधनेनकिंममजीवितेनगृहेण ॥ २ ॥

किंकरिष्यतीति साराधाचिरंविरहेणचिरकालमद्वियोगेनकिंकरिष्यतिवि रहतापशांत्यर्थंकमुपायंकरिष्यतीत्यर्थः किंवदिष्यति ननुएतावतातस्या नेवकोवाग्रहः अन्यगोपीजनधनादिनाचित्तव्यावर्तनंकर्त्तव्यंतत्राह ताराधा विनाममजनेनलोकेनकिं तद्वियोगेनसर्वजनपरित्यागात् धनेनकिं ननु धनविनागृहसौख्यंनस्यात्तत्राह गृहेणाकिंप्रयोजनंनाकिमपि तद्वियोगेनवन वासाङ्गीकारात् ननुसुखास्पदंगृहंविनासुखंनस्यात्तत्राह ममनुखेनाकिंता विनासर्वंनिःफलमित्यर्थःसैवमेसुखरूपेतिभावः

॥ चिंतयामितदाननंकुटिलभ्रूरोषभरेण ॥

॥ शोणपद्ममिवोपरिभ्रमताकुलंभ्रमरेण ॥ ३ ॥

चिंतयामीति अहंतस्याः राधायाःआननंमुखंचिंतयामिस्मरामि कीदृश माननं रोषभरेणक्रोधातिशयेन कुटिलेवक्रेभ्रुवौयत्र किमिव उपरिव्या प्तंशोणपद्ममिव अत्ररोषारुणेमुखेशोणपद्मसादृश्यंबोध्यं वारंवाररोषाद्वक्रीभवं त्योर्भ्रुवोर्भ्रमद्भ्रमरोपमाबोध्या

॥ तामहंहृदिसंगतामनिशंभृशंरमयामि ॥

॥ किंवनेनुसरामितामिहकिंवृथाविलपामि ॥ ४ ॥

तामिति अहंत्वदिसंगताराधांअनिशंवारंवारं भृशमतिशयेनस्मयामि की दृशा नीतिभावः इत्थमनेतांराधांकिमनुसरामित्वदिसंगतत्वादेववृथाव्यर्थमेव किंचिज्जपामिविलापंकरोमि

॥ तन्विखिन्नमसूययाहृदयंतवाकलयामि ॥

॥ तन्नवेद्मिकुतोगतासिनतेनतेनुनयामि ॥ ५ ॥

त्वदिसंगतातां प्रत्याह तन्वीति हेतान्विअसयया आविष्णुत्वेनदुःखितंतव हृदयंआकलयामितर्कयामितत्स्मादहंनवेद्मिन जानेकुतःकुत्रगतासि तेन कारणेनतेतुभ्यंनानुनयामिनप्रसादयामिकेआर्यापदमितिचतुर्थीतेइति

॥ दृश्यसेपुरतोगतागतमेवमेविदधासि ॥

॥ किंपुरेवससंभ्रमंपरिरंभणंनददासि ॥ ६ ॥

दृश्यसेइति हेराधेत्वंममपुरतःअग्रेगतागतंगमनागमनमेवविदधासिकरोषी तिदृश्यते तर्हिपरेवपूर्ववत्ससंभ्रमंसवेगंपरिरंभणमालिंगनंकिंकेनकारणेन नददासिविरहिणाहिचिंतानुषंगात्स्वंतस्तामेवपश्यंति

॥ क्षम्यतामपरंकदापितवेदृशंनकरोमि ॥

॥ देहिसुंदरिदर्शनंममन्मथेनदुनोमि ॥ ७ ॥

क्षम्यतामिति हेसुंदरिपूर्वकृतमपराधंक्षम्यतां अपरमीदृशंतवापराधंकदा पिनकरोमिनकरिष्यामि अतएवममदर्शनंदेहि यतः अहंमन्मथेनकामे नदुनोमि पीडामनुभवामि

॥ वर्णितंजयदेवकेनहरेरिदंप्रणतेन ॥
॥ किंदुबिल्वसमुद्रसंभवरोहिणीरमणेन ॥ ८ ॥
॥ इतिश्रीगीतगोविंदेसप्तमःप्रबंधः ॥

वर्णितमिति जयदेवकेनस्वार्थेकःइदंगीतंवर्णितं कीदृशेनजयदेवकेन हरेःप्रणतेनकृष्णस्याराधनेन पुनःकीदृशेन किंदुबिल्वंजयदेवकुलंतदेवसमुद्रस्तस्मात्संभवोयस्य एतादृशोरोहिणीरमणश्चंद्रइव यथासागरादुत्पन्नश्चंद्रस्तथाकिंदुबिल्वोत्पन्नोजयदेवइति यद्वा किंदुबिल्वग्रामः

॥ हृदिबिसलताहारोनायंभुजंगमनायकः ॥
॥ कुवलयदलश्रेणीकंठेनसागरलद्युतिः ॥
॥ मलयजरजोनेदंभस्मप्रियारहितेमयि ॥
॥ प्रहरनहरभ्रांत्यानंगक्रुधाकिमुधावसि ॥ १ ॥

इदानींकामएवमेदुःखंप्रयच्छतीतितमुपालंभंगांचयंकरोमीत्याशयेनाह हृदीति हेअनंग त्वंमयिहरभ्रांत्यामहादेवभ्रमेणनप्रहर प्रहारंकुरुक्रुधाकोपेन किमर्थंमिति धावसिधावितुंधावनंकरोषि कीदृशेमयिप्रियारहितेराधावियोगिनिमयिहरभ्रांत्यानप्रहरप्रहारंमाकुरु सर्वदाप्रियायुक्तोअहंवधुनाप्रियारहितइतिमयिहरभ्रमोनयुक्तइतिभावः हरभ्रांतिंपरिहरति हेकाममममहृदिबिसलतायाःहारोमृणालकृतायाहारस्तद्विरहजन्यसंतापशांत्यर्थंवृतः नायंभुजंगमनायकःशेषः इयंकंठेकुवलयदलानांनीलोत्पलानांश्रेणीपंक्तिःशैत्यायधृतानतुसागरलद्युतिर्हालाहलदीप्तिः इदंमलयजरजोचंदनलेपोसर्वांगेतापशांत्यर्थंधृतंनतभस्मविभूतिः

॥ पाणौमाकुरुचूतसायकममुंमाचापमारोपय ॥

॥ क्रीडानिर्जितविश्वमूर्छितजनाघातेनकिंपौरुषं ॥

॥ तस्याएवंमृगीदृशोमनसिजप्रेंखत्कटाक्षानिल ॥

॥ ज्वालाजर्जरितंमनागपिमनोनाद्यापिसंधुक्षते ॥ २ ॥

पुष्पसायकत्वेनकामः प्रसिद्धोतः इमान्चूतमंजरीरूपानेषबाणान्धनुष्या रोप्यमांताडयिष्यतीतिशंकयापुनरपिकामायैवदैन्यंकरोति पाणाविति हेक्रीडानिर्जितविश्वक्रीडयालीलयाजितंभुवनंयेनसः अमुंचूतसायकं आ म्रपुष्पबाणंपाणौहस्तेमाकुरुचापंधनुः मारोपय सशरंमाकुरु हस्तेपि चेत्करोषितर्ह्यमुंसायकंमासंधेहीत्यर्थः हेमनसिजमदनयतःमूर्छितस्यमूर्छां प्राप्तस्यमादृशजनस्याघातेनपीडयाकृतेपौरुषंकस्तवपुरुषार्थः नकिमपीत्यर्थः मूर्छितत्वेकारणमाह तस्याएवमृगीदृशोहारिणीनयनायाः तस्याएवेतिविर हातिशयेनराधानामग्रहणाशक्तिःप्रतिपाद्यते प्रेंखंतोचलंतोकटाक्षाएवान लाःवन्हयस्तेषांज्वालापंक्त्याजर्जरितंखंडखंडीभूतंममवमनःमनागपिस्वल्पमपि नाद्यापिसंधुक्षतेस्वस्थंनभवति क्वचित्कटाक्षाशुगेतिपाठःतदाकटाक्षएवा ऽशुगाबाणाः

॥ भ्रूपल्लवंधनुरपांगतरंगितानि ॥

॥ बाणागुणाःश्रवणपालिरितिस्मरेण ॥

॥ तस्यामनंगजयजंगमदेवताया ॥

॥ मस्त्राणिनिर्जितजगंतिकिमर्पितानि ॥ ३ ॥

ननुतत्कटाक्षादिचिंतनादेवतवदुःखंभवतिमदनस्यतर्हिकोपराधस्तत्राह भ्रू पल्लवमिति इतीत्थंप्रकारेणस्मरेणकामेनतस्यांराधायांअस्त्राणिअर्पितानि

स्थापितानि किंतर्कयामि किंवितर्केनन्वस्त्राणिवीरेणस्वहस्तेसंस्थापयितुमु
चितानिनत्वन्यत्रेत्याह निर्जितानिजगंतियैस्तानितैरेवतैर्जगत्रयंजित्वा
तत्रस्थापितानीतिभावःतर्ह्यन्यत्रकिंस्थापितानीत्याह अनंगस्यकंदर्पस्यजयेत्रै
लोक्यविजये जंगमदेवतायांगमनशीलदेवतारूपायां इतीतिकिं भ्रूपल्ल
वंभ्रूलतातदेवधनुःअपांगतरंगितानिकटाक्षनिरीक्षणानिएवबाणाः श्रवणपा
लिःकर्णप्रदेशएवगुणःप्रत्यंचा

॥ भ्रूचापेनिहितःकटाक्षविशिखोनिर्मातुमर्मव्यथां ॥
॥ श्यामात्माकुटिलःकरोतुकबरीभारोपिमारोद्यमं ॥
॥ मोहंतावदयंचतन्वितनुताबिंबाधरोरागवान् ॥
॥ सद्वृत्तस्तनमंडलस्तवकथंप्राणैर्ममक्रीडति ॥ ४ ॥

अधुनामनोविषयीकृतांराधांप्रतिस्वीयंदुःखमाह भ्रूचापइति हेतन्विकृशां
गिभ्रूचापेभ्रुवावेवचापंधनुस्तत्रनिहितःअर्पितःकटाक्षविशिखःकटाक्षबाणःम
र्मव्यथांमर्मपीडांतावन्निर्मातुकरोतु विशिखस्यमर्मव्यथाजनकत्वंयुज्यतएवे
तिभावः अनुचश्यामात्माश्यामवर्णःकुटिलःवक्राकारःकबरीभारोपिकेशस
मूहोपिमारोद्यमंकामोनत्यंतावत्करोतु योतमेलिनःकुटिलश्चभवतिसोन्यमा
रणाययत्तएवेतिसूचितं अयंचबिंबाधरःबिंबोष्ठःमोहंतनुताविस्तारयतां
कथंभूतोबिंबाधरःरागवान्लोहितवर्णःरागिणोविषयिणः मोहोममत्वंयुज्यत
एव सद्वृत्तःसाधुवर्तुलःतवस्तनमंडलःममप्राणैः कथंक्रीडतियेसद्वृत्तासन्मार्ग
प्रवर्तकास्तेतुपरप्राणघातकाःनभवंतिविरोधनामालंकारः

॥ तानिस्पर्शसुखानितेचतरलस्निग्धादृशोर्विभ्रमाः ॥

॥ स्तद्वक्त्रांबुजसौरभंसचसुधास्यंदीगिरांवक्रिमा ॥
॥ साबिंबाधरमाधुरीतिविषयासंगेपिमन्मानसं ॥
॥ तस्यांलग्नसमाधिहंतविरहव्याधिःकथंवर्तते ॥ ५ ॥

तानीति तान्येवस्पर्शसुखानि यानिपुरानायिकासंगमानुभूतानि एते
नत्वागेंद्रियविषयलाभः तेचतरलाश्चंचलाःस्निग्धाःप्रेमान्विताःदृशोश्चक्षुषोर्वि
भ्रमाविलासाःएतेनरूपं तदेववक्त्रांबुजसौरभंवदनकमलसौरभितं एतेनगंध
त्वंसचसुधास्यंदीअमृतद्रवयुक्तःगिरांवचसांयःवक्रिमावक्रत्वंएतेनशब्दःसाच
बिंबाधरमाधुरीबिंबसदृशोष्ठमाधुर्यंतदेवएतेनरसःइत्येवंप्रकारेणविषयासंगे
पितस्याःस्पर्शादीनांतामिच्छेपियममानसंमनस्तस्यांराधायांलग्नसमा
धिमास्थानवदपि तदाहंतइतिखेदेविरहः व्याधिःव्यथाकथंवर्ततेध्यान
युक्तस्ययोगिनोव्याधिनाशात्

॥ तिर्यक्कंठविलोलमौलितरलोत्तंसस्यवंशोच्चर ॥
॥ द्गीतस्थानकृतावधानललनालक्षैर्नसंलक्षिताः ॥
॥ संमुग्धंमधुसूदनस्यमधुरेराधामुखेंदौमृदु ॥
॥ स्पंदंप्रक्षवितास्चिरंददतुवःक्षेमंकटाक्षोर्मयः ॥ ६ ॥

॥ इतिश्रीगीतगोविंदेमहाकाव्येकविराजश्रीजयदेवकृतेमुग्ध
मधुसूदनोनामतृतीयःसर्गः ॥ ३ ॥

अथभक्तान्कविःसर्गांतेभक्तानाशीर्वचयति तिर्यकंठेति मधुसूदनस्यकृष्णस्यक
टाक्षोर्मयःकटाक्षदर्शनतरंगाःवःयुष्माकंभक्तानांक्षेमंकल्याणंददतुप्रयच्छंतु

कीदृशाःमधुरेसुंदरेराधायाःमुखमिंदुमिवतस्मिन् संमुग्धंअल्पकंमृदुस्पंदांके
ि स्खलनंचयथास्यात्तथा कंदलिताःपल्लविताःइंदुदर्शनात्तरंगाः अतीमंद
तीतिकटाक्षाणांतरंगसाम्यं नन्वन्यासुपश्यंतीषुकथंराधामुखचंद्रएवपल्ल
विताउर्म्यःअतआह वंशावदुच्चरन्त्येवजोर्नेर्गच्छतु गीतस्थानेषुगानपदेषु
कृतावधानैर्दत्तमनोभिर्लक्षितोगोपांगनासहस्रैर्नसंलक्षिताःनज्ञाताः कथं
भूतस्यमधुसूदनस्यातिर्यग्वक्रःकंठोयस्यविलोलश्चंचलोमौलिर्मस्तकःकीरिटो
वायस्यतरलश्चंचलउत्तंसअवतंसोयस्य नःपश्चात्कर्मधारयःलक्षपदंबहुत्वोपल
सकंमुग्धोहरिर्विरहीत्यर्थः

॥ यमुनातीरवानीरनिकुंजेमंदमास्थितं ॥
॥ प्राहप्रेमभरोद्भ्रांतंमाधवंराधिकासखी ॥ १ ॥

इदानींराधासखीकृष्णंप्रत्याह यमुनेति राधिकायाःसखीमाधवंकृष्णंवक्ष्य
माणंप्राह उक्तवती कीदृशंमाधवंयमुनायास्तीरेयःवानीरनिकुंजःवेतसापल
क्षितलतागृहमंदतूष्णीं आस्थितंआसीनंपुनःकीदृशं प्रेम्णाराधायांप्रेमातिशयेनउद्भ्रांतं उद्विग्नचित्तं कथंमयिप्रसादंयास्यतीत्युद्भ्रांतं

॥ कर्णाटकरागेणएकतालीतालेनगीयते ॥
॥ निंदतिचंदनमिंदुकिरणमनुविंदतिखेदमधीरं ॥
॥ व्यालनिलयमिलनेनगरलमिवकलयतिमलयसमीरं ॥ १ ॥

॥ साविरहेतवदीना ॥

॥ माधवमनसिज ॥ विशिखभयादिवभावनयात्वयिलीना ॥

॥ ध्रुवपदं ॥

उक्तश्लोकार्थंगीतेनाह निंदतीति अस्यकर्णाटकरागः तल्लक्षणं कपोलपाणिर्गजदंत तत्रमेकंवहन्दक्षिणकर्णपुरेसंस्तूयमानःसुरचारणौघैःकर्णाटरागःसितनीलकंठःइति अत्रगीतेविरहोत्कंठावर्णनीयावासकशय्यासोत्कंठास्वाधीनभर्तृकास्तथाकलहांतारिताची।पिवप्रलब्धाानसीरकांखिडतोप्रोषितौचवनीकाश्चाष्टसंस्मृताःतत्रोत्कंठालक्षणंभरतोक्तं यस्याःसमुचितेप्यन्हिप्रिवासीनेतिवल्लभःसास्मरानलसंतप्ताविरहोत्कंठितामता इति गीतार्थस्तुहेमाधवसाराधातवविरहेसतिदीनादुःखिता त्वयित्वद्विषयेभावनयाअनुचिंतनेनकामबाणःकृष्णःहृदयेप्रविश्यास्थितांमांनपीडयिष्यतीतिभावनयालीनाप्रविष्टाकस्मादिव मनसिजविशिखभयादिव केनप्रकारेणेत्याह हेकृष्णसाराधाचंदनंनिंदति इंदुकिरणंचंद्रदीप्तिं अनुलक्षीकृत्य अधीरंअनल्पखेदंविंदतिलभते मलयसमीरंमलयवातं व्यालनिलयंसर्पस्थानं चंदनवृक्षस्तस्यांमिलनेनस्पर्शनेनगरलमिवाविषमिवकलयतिमन्यते

॥ अविरलनिपतितमदनशरादिवभवदवनायविशालं ॥
॥ स्वहृदयमर्मणिवर्मकरोतिसजलनलिनीदलजालं ॥ २ ॥

अविरलेति हेकृष्णसाराधास्वहृदयमर्मणिसजलनलिनीदलजालंसजलकमलिनीपत्रसमूहमेववर्मतनुत्रंकरोतिकस्मैप्रयोजनायभवदवनायस्वहृदयास्थितस्यभवतोरक्षणाय कस्मादिवअविरलंनिरंतरंपतितोयोमदनशरःकामबाणस्तस्मादिव कीदृशंवर्म।विशालंविस्तीर्णंत्वंतस्याहृदयेसर्वदाइतिभावः

॥ कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयं ॥
॥ व्रतमिवतवपरिरंभसुखायकरोतिकुसुमशयनीयं ॥ ३ ॥

कुसुमेति कुसुमशयनीयंपुष्पशय्यांकरोति कीदृशंअनल्पविलासकलाभिः बहुतरक्रीडाभिःकमनीयंसुंदरंपुष्पशय्यास्वयमेवमनोज्ञा इयंशय्याविरचना कुशलाशय्याभावेपुष्पशय्यांकरोतीत्यर्थः कमिव कुसुमविशिखःकामस्तस्य शरः:पुष्पाणितान्येवतल्पशय्यातादृशंव्रतमिवशरशय्याशयनरूपंदारुणव्रतमि तिभावःकिमर्थंव्रतमित्यतआह तवपरिरंभसुखाय आलिंगनसुखंप्राप्तुमित्यर्थः

॥ वहतिचगलितविलोचनजलधरमाननकमलमुदारं ॥
॥ विधुमिवविकटविधुंतुददंतदलनगलितामृतधारं ॥ ४ ॥

वहतीति साराधाउदारंमनोज्ञंआननकमलंवहतिधारयति कीदृशंचालि तं उच्छ्वसितंयद्विलोचनजलंनेत्राश्रु तद्धारयतीति कमिव विधुमिवकीदृ शंविधुं विकटेनदारुणेनमहताविधुंतुदस्यराहोर्दंतेनदलनात्गलितामृतधा रायस्मात्

॥ विलिखतिरहसिकुरंगमदेनभवंतमसमशरभूतं ॥
॥ प्रणमतिमकरमधोविनिधायकरेचशरंनवचूतं ॥५ ॥

विलिखतीति हेकृष्णसाराधा असमशरभूतंकंदर्परूपंभवतंत्वां रहसिए कांतेकुरंगमदेनमृगमदेमकस्तूरीकयाविलखति अधःकामरूपस्यभवतोऽध स्तान्मकरंकामवाहनंविनिधायकृत्वाकरेहस्तेनवचूतंनूतनाम्ररूपंशरंबाणंच विनिधायसंस्थाप्यप्रणमतिपूजानंतरप्रणामोयुज्यतएवमकरस्यध्वजत्वेप्रसि द्धेवाहनत्वेपिनदोषः

॥ प्रतिपदमिदमपिनिगदतिमाधवंतवचरणेपतिताहं ॥
॥ त्वयिविमुखेमयिसपदिसुधानिधिरपितनुतेतनुदाहं ॥ ६ ॥

प्रतिपदमिति हेकृष्णसाराधाप्रतिपदंप्रतिक्षणंइदमपिनिमदतिइदंकिं हे माधवहेकृष्णतवचरणेऽहंपतिता किमित्यतआह त्वयिविमुखेपराङ्मुखेस तिमायिसपदितत्क्षणंसुधा॰ धिर॰ चं॰ पितनुदाहंबारीरपीडांतनुतेविस्तारय तियतथंप्राप्यंवंकृतवेअतस्तवचरणेपतिता

॥ ध्यानलयेनपुरःपरिकल्प्यभवंतमतीवदुरापं ॥

॥ विलपतिहसतिविषीदतिरोदितिचंचतिमुंचतितापं ॥ ७ ॥

ध्यानेतिहेकृष्णअतिविदुरापंदूतिद्वारा॰ विदुर्लभंभवंतंध्यानलयेनचित्रैकाग्र्यवशे वेण पुरोग्रेपरिकल्प्यकल्पनांकृ वार्मीयस्नेहंइदानीमपिनकरोर्तीतिविलापंकरो तीति हसतितवदर्शनेन विषीदतिहास्यानंतरआनर्थक्यात् अतएवरो दिति चंचतिस्थानांतरंगच्छ॰ ॰स्थानांतरेआलिंगनादिकंकारिष्यतीति अत एवता॰ मुंचतिमनस्तापंत्यजति

॥ श्रीजयदेवभणितमिदमधिकंयदिमनसानटनीयं ॥

॥ हरिविरहाकुलबल्लवयुवतिसखीवचनंपठनीयं ॥ ८ ॥

॥ इतिश्रीगीतगोविंदेपंचमःप्रबंधः ॥

श्रीजयदेवेति श्रीजयदेवेनभणितंकथितंगीतं मनसाचित्तेनअधिकंसाति शयं॰दि नटनीयंनृत्तयितव्यं तदाहरिविरहेणकृष्णवियोगेनाकुलाया:बल्लव युवत्या: राधाया:सखीवचनंगीतरूपंपठनीयंश्रीजयदेवगीतेष्विदमातिशयि तव्यमितिभाव:

॥ आवासोविपिनायतेप्रियसखीमालापिजालायते ॥
॥ तापोपिश्वसितेनदावदहनज्वालाकलापायते ॥
॥ सापित्वद्विरहेणहंतहरिणीरूपायतेहाकथं ॥
॥ कंदर्पोपियमायतेविरचयन्शार्दूलविक्रीडितं ॥ १ ॥

गीतोक्तमर्थंश्लोकेनाह आवासइति हेकृष्णहंतेतिखेदानुकारे साराधापित्वद्विरहेणभवद्वियोगेन हरिणीरूपायतेमृगीरूपमिवाचरति कथमित्यतआह आवास:गृहंविपिनायतेवनमिवाचरतीति त्वद्विरहात् प्रियसखीमालापिसखीसमूहोपिस्वेच्छागमननिवारकतयाजालायतेजालमिवाचरति तापोपिदेहदाहोपिश्वसितेनश्वासोच्छ्वासेनदावदहनज्वालाकलापायते अरण्यवन्हिज्वालापरंपरेवाचरति कंदर्पोपिकामोयमायतेयमइवाचरति हाशब्द:स्वात्मनोदु:खाभिव्यसूचनार्थ: कीदृश:कदर्प:शार्दूलविक्रीडितंव्याघ्रचेष्टितंविरचयन् मृगीमरणशार्दूलादेवभवति

॥ देशाखरागेणएकतालीतालेगीयते ॥

॥ स्तनविनिहितमपिहारमुदारं ॥
॥ सामनुतेकृशतनुरतिभारं ॥ १ ॥
॥ राधिकाविरहेतवकेशव ॥

॥ ध्रुवपदं ॥

इदानींसखीपुनरपिराधायादु:खचेष्टितंगीतेनाह स्तनेति गीतस्यास्यदेशाखराग:एकतालीताल:तल्लक्षणं आस्फोटनविःकृतरांमहर्षानिंद्रुसन्नद्ध विशालबाहु: हेकेशवकृष्णतवविरहेजातेसति साराधाएवंचेष्टते कीदृशीत्य

तआह कृशतनुःविरहकृशशरीरासास्तनविनिहितमपिस्तनयोःस्थापितंउदा
रंबहुमूल्यंहारमपिभारमिवमनुते

॥ सरसमसृणमपिमलयजपंकं ॥
॥ पश्यतिविषमिववपुषिसशंकं ॥ २ ॥

सरसमिति साराधासरसमसृणंसार्द्रंचिक्कणंद्रवरूपमलयजपंकमपिचंदनले
पमपि वपुषिसशंकंविषमिवपश्यतितवविरहात्

॥ श्वसितपवनमनुपमपरिणाहं ॥
॥ मदनदहनमिववहतिसदाहं ॥ ३ ॥

श्वसितेति साराधाश्वसितपवनंनिश्वासवायुंमदनदहनमिवकामाग्निमिववह
तिधारयति वायोरपिदाहकत्वात् कीदृशं अनुपमःउपमारहितःपरिणा
होविशालतायस्यतं अतिदीर्घंसदाहंउष्णत्वाद्दाहयुक्तं

॥ दिशिदिशिकिरतिसजलकणजालं ॥
॥ नयननलिनमिवविगलितनालं ॥ ४ ॥

दिशीति साराधासजलकणजालं अश्रुबिंदुसमूहसहितंनयनमेवनलिनंप
द्मंदिशिदिशिभवद्दर्शनवांछयाविकिरतिक्षिपति कीदृशमिवगलितदंडमिव
सर्वतःपश्यतीत्यर्थः

॥ नयनविषयमपिकिशलयतल्पं ॥
॥ कलयतिविहितहुताशविकल्पं ॥ ५ ॥

नयनेति सा राधा नयनविषयमपिनेत्रगोचरमपिकिशलयतल्पंपल्लवशयनीयं नकलयतिनजानातिकथंभूतं विहितःकृतःहुताशस्याग्नेःविकल्पःसंशयो त्रतंअतिसंतापजनकत्वात्तांदृशंगणयतिमनुते

॥ त्यजतिनपाणितलेनकपोलं ॥

॥ बालशशिनमिवसायमलोलं ॥ ६ ॥

त्यजतीति सापाणितलेनहस्ततलेनकपोलंगंडस्थलंनत्यजति शंकितत्वा त् कमिव सायंसंध्याकालेअलोलंनिश्चलंबालशशिनमिवद्वितीयाचंद्रमिवह स्तेनाच्छादितत्वात्संध्यासाम्यं

॥ हरिरितिहरिरितिजपतिसकामं ॥

॥ विरहविहितमरणेवनिकामं ॥ ७ ॥

हरिरितिसानिःकाममतिशयेनसकामंसाभिलाषंहरिहरिरितिजपतिकथंभूतेव विरहेणत्वद्वियोगेनविहितंकृतंमरणंयस्याःसैवअन्येपिमरणेहरिरितिमंत्रंजपंति

॥ श्रीजयदेवेभणितमितिगीतं ॥ सुखयतुकेशवपदमुपनीतं ॥ ८

॥ इतिश्रीगीतगोविंदेनवमःप्रबंधः ॥

श्रीजयदेवोक्तंइतिपूर्वगीतंकेशवएवपदंविश्रांतिस्थानंयस्यतत्भक्तंसुखयतु- कीदृशं उपनीतंउपस्थितीकृतं

॥ सारोमांचतिसीत्करोतिविलपत्युत्कंपतेताम्यति ॥

॥ ध्यायंत्युद्भ्रमतिप्रमीलतिपतत्युद्यातिमुर्छत्यपि ॥

